स्पष्टार्थाः सर्वेऽपि । परमनेन प्रकारेण षष्ट्यंशात्मिका दृष्टिः स्यात्षष्टिभक्ता सती रूपादिका स्यादिति बोद्धव्यम् । वासनाश्च श्रीपतिकृतदृष्टिसाधनवासनावज्ज्ञेया स्पष्टत्वाद् ग्रन्थबाहुल्यभयाच्च न मया लिख्यते ॥ यत्तु केन चित्प्रलपितं बृहज्जातके वीक्षणेऽधिका इत्युक्तेः रविजादीनां त्रिदशादिस्थाने अन्यग्रहापेक्षया वीक्षणे आधिक्यमात्रं न तु संपूर्णत्वं । तथा सति पद्धत्युक्तं विशेषदृगानयनमसङ्गतमार्षग्रन्थानुक्तत्वादिति । तच्चिन्त्यम् । पराशरजातके विशेषदृगानयनस्योक्तत्वात् । तथा च पराशरवाक्यम् ।

शरवेदाः खरामाश्च तिथयो योजिताः क्रमात् ।
शनिदेवेज्यभौमानामेवं दृष्टिः स्फुटा भवेत् ॥

सारावल्यामपि । पूर्णं पश्यति रविजस्तृतीयदशमे इत्यादि । बृहज्जातकटीकायामुत्पलव्याख्यानं चेदृशं तृतीयदशमस्थितान्ग्रहराशीन्शनैश्चरः पश्यन्नन्यग्रहेभ्योऽधिकफलप्रदो भवति परिपूर्णं पश्यतीत्यर्थ इति । तस्माद्विशेषदृक्साधनमार्षमूलकमिति सर्वमवदातम् ॥

सवासना या समकारि वृत्तिर्दिवाकरेणामलकेशवोक्तेः ।
पितृव्यसम्प्राप्तधिया खगानां दृक्साधनं तत्र समाप्तिमागात् ॥ २ ॥

इति श्रीकृष्णदैवज्ञात्मजनृसिंहगणकस्य सुतेन दिवाकरेण विरचितायां केशवोक्तजातककर्मपद्धतिटीकायां सवासनायां प्रौढमनोरमाभिधायां दृष्टिसाधनाध्यायो द्वितीयः ॥ २ ॥

श्रीमच्छ्रियास्यस्य मतानुसारं प्राचां कृतिभ्यः परिगृह्य सारम् ।
खेचारिवीर्यानयनाधिकारं दिवाकराख्यो विवरीवरीति ॥ १ ॥

अथ बलसाधनाध्यायो व्याख्यायते ।

तत्र बलं द्विविधं । ग्रहबलं भावबलं चेति । आद्यं स्थानदिक्कालनिसर्गचेष्टदृग्भेदैः षड्विधम् । तत्रापि स्थानबलं पञ्चधा दिग्बलमेकधा कालबलं चतुर्द्धा निसर्गबलमेकधा चेष्टाबलं त्रिधा दृग्बलमेकधैव । एवं पञ्चदशधा ग्रहबलम् । द्वितीयं त्रिविधं स्वामिबलदिग्बलदृग्ब-

लभेदात् । तत्र तावद् ग्रहबलं विवक्षुः स्थानबलभेदेषूच्चबलमाह ॥

**नीचोनो भगणात् च्युतः षडधिकश्चेत्षड्हृदोस्त्वं बलम् ॥**

नीचेनोनोऽर्थाद् ग्रहश्चेत्षडधिकस्तर्हि भगणाद्द्वादशराशिभ्यः च्युतः शुद्धः चेत्षड्राश्यल्पस्तदा यथास्थित एवेत्यर्थतः सिद्धम् । ततः षड्हृत्षड्भक्तः सन् उच्चसम्बन्धिग्रोच्च बलम् । उच्चबलं रूपादिकं स्यादित्यर्थः । अत्रायमभिसन्धिः । यदि नीचोनग्रहस्य सम्पूर्णाः षड्राशयः स्युस्तदा ते षड्भक्ताः पूर्णे रूपमितं बलं स्यात् । यदि षडल्पास्तदा प्रथमरूपस्थाने शून्य ग्राह्यम् । तद्राश्यादं षष्ट्या गुण्यं ततो विकलास्थानात्प्रतीपं स्वस्वहारेण लब्धमुपर्युपरि संयोज्य यदूर्ध्वस्थानं भवति तत्पुनः षड्भिर्भाज्यम् । लब्धं शून्याधः षष्ट्यंशा ज्ञेयाः । शेषं राश्यादिस्थानीयं पुनः षष्ट्या संगुण्य प्राग्वत्कृते यदूर्ध्वस्थाने निष्पद्यते तदपि षड्भिर्भाज्यं,लब्धं तदधो विषष्ट्यंशाः । एवं विधं रूपाद्युच्चबलं भवति । यद्वा प्रथमं रूपस्थाने शून्यं ग्राह्यं ततो राशीन्षष्ट्या संगुण्य तत्र द्विगुणानंशान्संयोज्य षड्भिर्भागे हृते लब्धं षष्ट्यंशाः स्युः । पुनर्यच्छेषं तत्षष्ट्या संगुण्य तत्र द्विगुणाः कलाः प्रक्षिप्य षड्भिर्भक्ते विषष्ट्यंशाः स्युरेवमग्रेपि । यद्वा । नीचग्रहान्तरस्य षड्भाल्पस्यार्धांशाः षष्ट्यंशाद्युच्चबलं स्यात् । तत्षष्टिभक्तं रूपादिकमपि स्यादतिसुगमप्रकारोयम । उच्चनीचविभागः सारावल्याम् ।

सूर्यादीनामुच्चाः क्रियवृषमृगयुवतिकर्कमीनतुलाः ।
स्वोच्चे तु कथ्यभागा यथाक्रमेणैव परमोच्चाः ॥ १ ॥
दिग्वन्ह्यष्टाविंशतितिथिबाणाश्चिनार्विंशतयः ।
स्वोच्चात्सप्तमराशिर्नीचः स्यात्तदंशकैः परमः ॥ २ ॥

अथोपपत्तिः । साराबलीवाक्यम् । स्वोच्चेस्थितः शुभफलं प्रकरोति पूर्णं नीचस्थितस्तु विफलमिति । अथोच्चस्थे ग्रहे फलपर-

मत्वाद्बलं परमं रूपमितं तत्र । नीचग्रहान्तरमपि परमं षड्राशितुल्यं ततो नीच यावदपचयः नीचे फलाभावाद्बलाभावः तत्र नीचग्रहान्त-राभावश्च तत उच्चं यावद् पचयः ॥ अतो नीचग्रहान्तरत एवोच्चबल साधयितु युज्यते । अथानुपातः । यदि षड्राशितुल्येन नीचग्रहान्तरेण रूपं बल तदेष्टेन किमिति फलमुच्चबलं स्यात् । अतः सम्यगुक्तं नीचो-नः षड्हृदिति । परमोच्चादपरस्थे ग्रहे ग्रहेणोनं नीचं कार्यं नीचादपरस्थे नीचोनो ग्रह इति । अत्राचार्यैः सर्वदा नीचेनैवोनो ग्रहः कर्तव्य इ-त्युक्तं तथा कृते उच्चादपरस्थे ग्रहे नीचग्रहान्तरमुपचीयते । बलं त्व-पचीयते । उपचीयमानादन्तरादपचीयमानं बलं साधयितुं न युज्यत इति भगणाच्च्युत इत्युक्तम् । भगणाच्छोधिते नीचादर्वाचीनराश्यादि शिष्यते । एतदुच्चादपरस्थे प्रतिदिनमपचीयत इत्यस्मादपचीयमानं बलं साध्यमिति युक्तम् । अथ षष्ट्यग्रहणोपपत्तिः । प्रथमं रूपस्थाने शून्ये गृहीते सत्यनन्तरं रूपस्य षष्ट्यंशा ग्राह्याः । तत्र षष्ट्यगाना षष्ट्या रूपमिति शेषं षष्टिगुणं कृत्वा षड्भक्ते षष्ट्यंशाः स्युरिति युक्तम् । एवं विषष्ट्यंशषष्ट्या षष्ट्यंश इति शेषं पुनः षष्ट्या संगुण्य षड्भिर्भक्ते विषष्ट्यंशाः स्युरित्यपि साधु । अथ द्वितीयप्रकारवासना प्रथमप्रकारा-न्तर्भूतोदाहरणमुररीकृत्योच्यते । तत्र नीचोनो ग्रहो राश्यादिः । ० ॥ १६ । ५६ । ५६ । अस्मै षड्भक्तो लब्धं रूपस्थाने शून्यं शेषं षष्टिगुणितमिदम् । ३२ । ५६ । ५६ । ० । अत्र राशिस्थाने षष्टिगु-णाशित्रिगुणांशयोगः । अंशस्थाने कलाः । कलास्थाने विकला इति जातम् । एतत्षड्भक्तं कार्यम् । अतो राशीन्षष्ट्या मगुण्य तत्र त्रिगु णानशान्प्रक्षिप्य षड्भिर्भक्ते लब्धं षष्ट्यशाः स्युरिति सम्यगुक्तम् । पुनः शेष २ । ५६ । ० । ० । षष्टिगुणम् १०२ । ५६ । ० । ३६ राशिस्थाने षष्टिघ्नशेषत्रिघ्नकलायोगोंऽशस्थाने विकलाः । इदं षड्भि-र्भाज्यम् । अतः सूक्तं त्रिगुणाः कलाः सयोगेंऽश्यादि । प्रथमशेष दृष्टव्यम् । अथोच्चबलस्य द्वितीयप्रकारे युक्तिः । षड्राशितुल्ये नीच-

ग्रहान्तरे बलं परममिति प्रागुक्तं तत्र षड्राश्यंशाः १८० अत्र त्रैराशिकम् । यदि खाष्टेन्दुमितैर्नीचग्रहान्तरभागैः षष्टिषष्ट्यंशा लभ्यास्तदेष्टैः किमित्यत्र गुणहरौ गुणेनापवर्त्य प्राप्तं हरस्थाने त्रयम् । अत उपपन्नं नीचग्रहान्तरस्य षड्भाल्पस्यांशत्र्यंशः षष्ट्यंशाद्युच्चबलमिति । तथा च पराशरहोरायाम् ।

नीचोनं तु ग्रहं भार्द्धाधिकं चक्राद्विशोधयेत् ।
भागीकृत्य त्रिभिर्भक्तं फलमुच्चबलं भवेदिति ॥

इदानीं सप्तवर्गजबलमाह ॥

**स्वर्क्षेऽर्द्धं समभेऽष्टमांस्त्रिचरणा मूलत्रिकोणे बलम् । मित्र-**
**र्क्षेऽङ्घ्रिरधीष्टभे त्रय इभांशा वैरिभेऽष्ट्यंशको दन्तांशो-**
**ऽध्यरिभे ग्रहादिपवशात्खेटस्य सप्तैक्यजम् ॥ ५ ॥**

अत्रायं गुरुसंप्रदायः । प्रथमं तत्र मन्दसितावित्यादिना निसर्गमित्रामित्रसमचक्रं लेख्यम् । ततोऽन्योन्यस्य धनव्ययाय सहजव्यापारबन्धुस्थिता इत्यनेन तात्कालिकमित्रामित्रचक्रं लेख्यम् । ततोऽधिसुहृन्मित्रादिभिः कल्पयेदिति अधिमित्रादिचक्रं च लेख्यम् । ततः सप्तवर्गजबलज्ञानार्थं सप्तवर्गचक्रमधिमित्रमित्रस्वसमवैर्यधिवैर्युपलक्षितसप्तवर्गैर्यान्वितं लेख्यमिति । अथ व्याख्या । स्वस्य स्वर्क्षे राशावर्थाद्ग्रहे सति अर्द्धं बलं स्यात्, समराशिस्थेऽष्टमांशो बलं, मूलत्रिकोणराशिस्थे त्रयश्चरणाः, मित्रराशिस्थे चतुर्थांशः, अधिमित्रभस्थे त्रयोऽष्टमांशाः, शत्रुराशिस्थे षोडशांशः, अधिशत्रुराशिस्थे द्वात्रिंशदंशो बलं स्यादिति सर्वत्र संबन्धः । अर्द्धाष्टमांशादि रूपस्येत्यर्थसिद्धम् । अत्र सर्वत्र राशिपदं होराद्युपलक्षकं तेनायमर्थः संपन्नः । स्वराशिस्थे स्वहोरादिस्थे वा ग्रहे रूपार्द्धं बलं स्यादेवमितरत्रापि । इदमत्रावगन्तव्यम् । ग्रहो यदा स्वमूलत्रिकोणराशेर्होराद्यंशस्थितो भवति तदा चरणत्रयं बलं न ग्राह्यं किं तु मूलत्रिकोणराशेर्योऽधिपतिः सोऽधिमित्रादिषु यद्भवति तदुक्तं बलं ग्राह्यं ग्रहाधिपवशादित्युक्त-

त्वात् । यदत्र विशेषेण मूलत्रिकोणग्रहणं कृतं ततः केवलं गृह एव मूलत्रिकोणान्वयो न होरादिष्विति । तयोक्तं श्रीधराचार्यैः । स्वगृहादिगतानां यद्ग्रहाणां मुदितं बलम् । तदेव सप्तवर्गेऽपि तदीशस्य वशाद्भवेदिति । तदीशस्य होरादिस्वामिनः । स्वाधिमित्रत्वादिवशात्स्वगृहादिगतानामेव यद्बलमुक्तं तदेव गृहस्योक्तत्वाद्ग्रहातिरिक्तसप्तवर्गे बलं भवति । अत्र स्वगृहादीत्युक्तत्वाद्धोरादिषु न त्रिकोणान्वय इति सिद्धम् । मूलत्रिकोणानि बृहज्जातके । सिंहो वृषः प्रथमषष्ठहयाङ्गतौलिकुम्भास्त्रिकोणभवनानि भवन्ति सूर्यादिति । स्वोच्चत्रिकोणस्वगृहाणां चयाणां द्वयोर्वा सांकर्ये व्यवस्था सारावल्याम् ।

विंशतिरंशाः सिंहे त्रिकोणमपरे स्वभवनमर्कस्य ॥
उच्चं भागत्रितयं वृष इन्दोः स्यात्त्रिकोणमपरेंऽशाः ॥ १ ॥
द्वादशभागा मेषे त्रिकोणमपरे स्वभं तु भौमस्य ॥
उच्चमथो कन्याया बुधस्य तुङ्गांशकैः सदा चिन्त्यम् ॥ २ ॥
परतस्त्रिकोणजातं पञ्चभिरंशैः स्वराशिज परतः ॥
दशभिर्भागैर्जीवस्य त्रिकोण धनुषि तत्परं स्वगृहम् ॥ ३ ॥
शुक्रस्य च तिथयोंऽशास्त्रिकोणमपरं स्वभं तुलायां तु ॥
कुम्भे त्रिकोणस्वगृहे रविजस्य रवेर्यथा सिंहे इति । मुहूर्तदर्पणेऽपि ।

सिंहे विंशतिरादितो गवि परे सर्वेशकास्तुङ्गतो
मेषे द्वादश पञ्च योषिति परे तुङ्गाद्धयाङ्गे दश ॥
जूके पञ्चदशाऽप्रदृग्वट इमे मूलत्रिकोणांशकाः
सूर्यादेः क्रमशो यदस्य कथिताः शेषाः स्वराश्यंशकाः ॥ १ ॥

गुणाकरस्तु सूर्यारजीवभृगुभानुभुवां नवांशैर्मूलत्रिकोणभवनमिति शास्त्रविरुद्धं ग्रथन् व्याख्यानमेवाविश्चकार । यस्मात्सारावलीवाक्यानां प्रमाणिकत्वाद्वृद्धेत्यनेनापि बृहज्जातकटीकायामुदाहृतत्वात्तु तेभ्य एव निर्णयः कार्यः । गुणाकरस्य तु द्रेष्काणबल इत्याद्यग्रथार्थाभिधायित्वान्तदुक्तमप्रमाणमेवेति मन्तव्यम् । अथो-

च्चबलस्य पृथगेवानीतत्वादुच्चस्थानपेक्षितत्वान्मूलत्रिकोणस्वगृहनिर्ण-यस्यैवापेक्षितत्वाच्च सम्पूर्णे यत्र वृषराशिरिन्दोस्त्रिकोणम् । किञ्च चन्द्रस्य वृषराशौ प्रधानमेकं मूलत्रिकोणबलमेव ग्राह्यं न तु मित्रा-दिसम्बन्धवशादन्यदपीति बोध्यम् । बुधस्य तु कन्यायां विंशत्यं-शास्त्रिकोणम् । परे दशांशाः स्वगृहम् । यत्र तूच्चत्रिकोणस्वगृहाणां त्रयाणामप्यपेक्षा तत्र स्वोच्चे रूपमित्यादौ यथोक्तैव व्यवस्था ॥ एवं स्वादिभादिगतानां ग्रहाणां बलमुक्त्वेदानीं सप्तसु वर्गेषु तत्स्थापनमथ च तदैक्ये सप्तवर्गजबलं भवतीत्याह । गृहादिपवशादित्यादिना । खेटस्य गृहादिपवशाद्गृहमादिर्येषां ते गृहादयः आदिशब्देन होरा-द्रेष्काणादीनां संग्रहः । गृहादीन् पान्ति ते गृहादिपाः गृहादिसप्त-वर्गस्वामिनस्तेषां वशात्स्वर्वैर्द्युमित्यादीनि सप्तवर्गबलानि ग्राह्याणि । तेषां सप्तानामैक्याज्जायते तत्तथा । एवंविधं बलं सप्तवर्गजबलं स्यादित्यर्थः एतदुक्तं भवति । यस्य ग्रहस्य सप्तवर्गजबलं ज्ञातुमिष्टं तस्य गृहादिस्वामी स्वाधिमित्रादिषु यद्भवति तदुक्तं बलं ग्राह्य-मिति । अत्र कश्चिदेवं व्याचष्टे । ग्रहो यस्मिन्गृहे होरादौ वास्ति तद्गृहस्वामी होरादिस्वामी वा चेन्मूलत्रिकोणेऽस्ति तदा त्रिचरणं बलं स्वगृहे चेद्रूपार्द्धमित्यादि । तन्न श्रद्धेयम् । निखिलजातकशास्त्र-विरोधात् । किं चात्र गृहादिपवशादित्युक्तेर्भ्रान्तिरपि सम्भवति । परं प्राचीनग्रन्थे केनापि तथा नोक्तमिति भ्रान्त्यनवकाश इति मिश्रा ऊचुः । तथा च सारावलीवाक्यम् ।

स्वोच्चस्थितः शुभफलं प्रकरोति पूर्णं
नीचार्कगस्तु विफलं रिपुमन्दिरेऽल्पम् ।
पादं फलस्य हितभे स्वगृहे तदर्द्धं
पादत्रयं गगनगः स्थितवांस्त्रिकोणे इति ।

अथ स्वोच्चादिस्थानेषु स्थितवान् गगनगो ग्रहः सम्पूर्णादिशुभ फलं ददातीत्युक्तं परं स्वोच्चादिषु स्थितो ग्रहस्वामी सम्पूर्णादिफल

ददातीति नोक्तमेव तस्माद् गृहादिस्वामिनि स्वभस्थे रूपार्द्धं बलमित्यादि व्याख्यानमसदेवेति प्रतीमः । पराशरजातकेऽपि । मूलत्रिकोणस्वर्क्षाधिमित्रमित्रसमारिषु । अधिशत्रुगृहे चापि स्थितानां क्रमशो बलमिति । अत्रापि मूलत्रिकोणादिस्थितानां वर्गेशानां बलं स्यादिति नाभिहितमेव । पुनर्भवेदेवम् । त्रिकोणादौ स्वोच्चे चोभयत्रापि गगनगपदस्य संबन्धाद्विनिगमनाविरहादुच्चबलमपि यदि नीचगृहस्वामित्वहान्तरतः साधितं स्यात् उच्चबलं तथा न साधितमतः केनचित्परविश्वासादव्याख्यातं तन्न सुधीभिरादरणीयम् । यत्तु केशवसांवत्सरैः स्वकृतटीकायामुक्तं ग्रहो यस्मिन्गृहेऽस्ति तद्गृहस्वामितः स्वर्क्षाद्युक्तबलं ग्राह्यमिति । तदपि सर्वप्राचीनग्रन्थाविरोधायान्यथा व्याक्रियते । ग्रहो यस्मिन्गृहेऽस्ति तद्गृहस्वामी चेत्स्वयमेव तदा रूपार्द्धं बलं यद्यधिसुहृत्तदा त्रय इभांशा इत्यादि । एवं होरादावपि ॥ अथोपपत्तिः ॥ बृहज्जातके । स्वोच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः । शुभं संपूर्णपादोनदलपादाल्पनिष्फलमिति ॥ एवं फलतारतम्यनिर्देशात्फलसदृशगेनैवोच्चादिगृहबलेन भवितव्यमतः स्वोच्चे रूपं मूलत्रिकोणे त्रिचरणं स्वगृहेऽर्द्धं पादो मित्रगृहे रिपुगृहेऽल्पं नीचे फलाभावाद्बलाभाव इति सिद्धम् । एवं तारतम्यवशादवशिष्टाधिमित्रसमशत्रुगृहाधिशत्रुगृहेषु फलं बलं च न्याय्यम् । तत्रादावधिमित्रगृह साध्यते । अधिमित्रगृहे स्वगृहापेक्षया न्यूनता मित्रगृहापेक्षयाधिक्यमिति प्रसिद्धम् । अतः स्वगृहाद्यावती न्यूनता तावत्येव मित्रगृहादधिकतेति न्यूनत्वाधिकत्वमर्द्धं व्यवस्थितम् । ततः स्वगृहमित्रगृहबलयोरन्तरार्द्धेऽस्मिन् ० । २० स्वगृहबलाद्विहीने मित्रगृहबले वा योजितेऽधिमित्रगृहबलं जातमिदम् । २२ । ३० । अनेनार्द्धाधिकं मित्रमधिमित्रमित्यधिमित्रशब्दस्य मुख्यार्थोऽपि व्यक्तीभूत इत्याहुः प्राञ्चः । तद्यथा । अधिमित्रे मित्रापेक्षयाऽर्द्धमित्रताऽधिका । एवमधिमित्रशब्दोपम्यादधिशत्रौ शत्रोरपेक्षया ऽर्द्ध-

शत्रुताऽधिका । अथ समगृहे । तत्र समशब्दार्थौ द्विधा अर्द्धमित्रमर्द्धशत्रुरित्येकः । न मित्रं न शत्रुश्चेति द्वितीयः । ततः शत्रुगृहे दशबलमित्युक्ते द्विगुणशत्रुगृहेऽर्धाद्यथा पञ्चबलं प्राप्यते तथाऽर्द्धशत्रोरपेक्षया शत्रोर्द्विगुण्यमिति समेऽर्द्धशत्रुतासत्त्वाच्छत्रुगृहबलाद्द्विगुणम् । अर्द्धमित्रतासत्त्वान्मित्रगृहबलस्यार्द्धं यथा स्यात्तथा समगृहबलं न्याय्यमतो मित्रगृहबलार्द्धं ७ । ३० जातं समगृहबलम् । एतदेव शत्रुगृहबलाद् द्विगुणमित्यस्यार्द्धे ३ । ४५ शत्रुगेहबलमपि सिद्धम् । समो न मित्रं न शत्रुरिति समान्मित्रतोऽपचये मित्रगृहबले मित्रतानिबन्धनं समगृहबलाद्यावदन्तरं तावदेवान्तरमपचीयमानमेवं शत्रुतानिबन्धनं शत्रुगृहबले वाच्यमिति युक्त्या शून्यं बलमवाप्यते । एतत्तु बाधितम् । रिपुमन्दिरेऽल्पमित्यल्पफलोपम्येनाचाल्पबलस्यावश्यकत्वान्नैव एव फलाभावस्योपपादितत्वात्तु । अथाधिशत्रुगृहे । समे शत्रुत्वमित्रत्वाभावात्ततः शत्रुतोऽपचयेन शत्रुगृहबले शत्रुतानिबन्धनः समगृहबलाद्यावान्ह्रासस्तावानधिशत्रोरपेक्षया शत्रोरर्द्धशत्रुताधिक्यान्निजार्द्धसहितः ५ । ३७ । ३० समगृहबलादूनः ७ । ३० सन्नधिशत्रुगृहबलं जातम् । १ । ५२ । ३० । अत्र शत्रुगृहबलस्य समगृहबलेनैव सिद्धत्वादधिशत्रुगृहबलस्यापि समगृहबलाधीनेयमेव सिद्धिर्न्याय्या नान्या । एवं गृहबलमुपपन्नम् । अथ स्वाधिमित्रादिहोराद्राणपि स्वाधिमित्रादिसंबन्धसाधारण्यात्स्वाधिमित्रादिगृहबलमेव बलं युक्तम् । एते स्वाधिमित्रमित्रादीनां पतीनामुपात्तत्वाद्गृहादिवशादिति सिद्धम् । बृहज्जातके । स्वत्रिकोणनवांशैः । स्वस्य त्रिकोणं च नवांशास्तैरित्यर्थः । पश्चात्स्वपदेनाधिमित्रादयो नवांशपदेन होराद्रयश्च लक्षिताः ॥ इति सप्तवर्गबलोपपत्तिः सुन्दरमिश्रोदिता ॥

अथ युग्मायुग्मराशिनवांशबलमाह ॥

**शुक्रेन्दू समभांशके हि विषमेऽन्ये दद्युरङ्घ्रिं बलम् ।**

समभांशके स्त्रीराशिनवांशके स्थितौ शुक्रेन्दू इति निश्चये-

नाङ्घ्रिं रूपचतुर्थांशं बलं दद्याताम् । भं चांशकश्च भांशकमित्यत्र द्वन्द्वैकवद्भावः । समं च तद्भांशकं च समभांशकं तस्मिन् । अयमर्थः । स्त्रीराशौ स्त्रीराशेर्नवांशे वा यदि शुक्रेन्दू भवतस्तदा रूपचतुर्थांशो बलं यदा तु स्त्रीराशौ स्त्रीराशेर्नवांशे चोभयोः स्थितौ भवतस्तदा पादद्वयं बलमित्यार्थसमाजमहिम्नैवोपलभ्यम् । अन्ये सूर्यभौमबुधगुरुशनयः विषमे भांशके पुंराशिनवांशे अङ्घ्रिं बलं दद्युः । पुरुषराशौ पुरुषराशिनवांशे वा स्थिताः सूर्यादयः पादबलं दद्युः । यदा तु पुंराशौ पुंराशिनवांशे च स्थिता भवन्ति तदा पादद्वयमित्यर्थः । अत्र विषमपदस्य पुमर्थोपलक्षकत्वं समपदस्य च स्त्र्यर्थोपलक्षकत्वमतो वृषस्य द्वितीयनवांशे स्थितस्य सूर्याद्यन्यतमस्य द्वितीयनवांशस्य युग्मत्वात्पादबलं न स्यादिति भ्रमो निरस्तः । अत्र द्वितीयनवांशः कुम्भस्येत्यस्य पुंभात्मकत्वमेव । अत्रोपपत्तिः स्त्रीराशिषु स्त्रीग्रहाणां पुरुषराशिषु पुरुषग्रहाणां बलाधिक्यं प्रसिद्धम् । तथा चात्र मेषाद्याः पुंस्त्र्याख्याश्चरस्थिरद्विस्वभावसंज्ञाश्चेत्यादिना समराशीनां स्त्रीत्वं विषमराशीनां पुरुषत्वमुक्तम् । तथा बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नराश्च शेषा इति शशिशुक्रयोः स्त्रीग्रहत्वं चातस्तयोः समराश्युपलक्षिते स्त्रीराशौ बलाधिक्यम् । तथैवेतरेषां पुरुषग्रहाणां विषमराश्युपलक्षिते पुरुषराशौ बलाधिक्यम् । अत्र शनिबुधयोर्नपुंसकत्वेऽपि पुरुषाकृतित्वात्पुंग्रहेष्वन्तर्भावः । तथा च लघुजातके । चन्द्रसितौ स्त्रीक्षेत्रे पुरुषक्षेत्रोपगाः शेषाः । बलिन इति । राशिसमोंशस्ततोंऽशेऽपि बलं सिद्धम् । किंचात्र द्वाविन्दुशुक्रौ युग्मांशे तिथिरोजांशकाः पर इति । पराशरवाक्येऽपि अंशे बलमुक्तम् । यथा सप्तवर्गबले ग्रहबलं नवांशबलं च स्वतन्त्रं तद्वदत्रापि पुंस्त्रीराशिबलं पुंस्त्रीराशिनवांशबलं चोभयं स्वतन्त्रमेव । अतो युग्मराशिगतत्वे सति युग्मांशगतत्वं विवक्षितम् । तयोरन्यतमे स्थितस्य पादबलं नोत्पद्यत इति सूर्यज्योतिर्विदोऽमतं परास्तम् ।

जातकसंग्रहे । मित्रगेहबलद्रेष्काणबलपुंस्त्रीराशिनवांशबलानां फलसाम्यनिर्देशान्मित्रगेहे यद्बलं तदेषां त्रयाणामिति विशेषयुक्त्या पादबलं सिद्धम् । यदा तु शुक्रेन्दू समभे समभांशे च भवतस्तदोभयोरपि स्वतन्त्रत्वात्पादद्वयं बलं युक्तियुक्तमिति गुरुचरणाः ॥ येपि तान्त्रिकाः । समभे समभांशे वा स्थितयोः शुक्रेन्द्वोः पादो बलमुभयत्रापि स्थितयोरपि पाद एव बलं न पादद्वयमित्याहुस्तदविचारितरमणीयम् ॥

अथ केन्द्रादिबलमाह ॥

## केन्द्राद्येषु च रूपकार्द्धचरणान्यच्छन्ति खेटाः क्रमात् ॥

केन्द्रमाद्यो येषां तानि केन्द्राद्यानि केन्द्रपणफरापोक्लिमानि तेषु स्थिताः खेटाः क्रमाद्रूपकार्द्धचरणान् बलानि यच्छन्ति ददति । रूपमेव रूपकं स्वार्थे कप्रत्ययः । अर्द्धं रूपार्द्धं चरणो रूपचतुर्थभागः । क्रमादिति केन्द्रस्था रूपबलं पणफरस्था रूपार्द्धम् आपोक्लिमस्थाः पादबलं दद्युरित्यर्थः । केन्द्रादिसंज्ञा बृहज्जातके । कटककेन्द्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखभानाम् । केन्द्रात्परं पणफरं परतश्च सर्वमापोक्लिममिति । अत्र केषिचद्भावस्वीकारः कृतस्तन्मतं न ग्राह्यमिति द्योतनार्थं चकारः । अथोपपत्तिः । भगवान् गर्गः । केन्द्रस्थः पूर्णबलो मध्यमबलः पणफरस्थितस्तद्वत् । आपोक्लिमगः प्रोक्तो हीनबलः खेचरो मुनिभिरिति ॥ केन्द्रे स्थितस्य संपूर्णं बलम् । संपूर्णता रूपात्मिकेति रूपं बलम् । पणफरस्थस्य मध्यबलं मध्यं त्वर्द्धरूपव्यवस्थितमित्यर्द्धरूपं बलम् । एवं सति पणफरापेक्षया केन्द्रस्थस्य द्वैगुण्यमित्यनयैव युक्त्यापोक्लिमस्थस्यापेक्षया पणफरस्थस्य द्वैगुण्यं सिद्धमतः पणफरस्थबलार्द्धं पादो हीनबलमापोक्लिमस्थस्य । अतः सर्वमुपपन्नम् । अत्र रत्नावलीकारेण भावस्वीकारः कृतः । तथा च तद्वाक्यम् । केन्द्रादियाता द्युसदोत्र भावफलं सदर्द्धं चरणान्वितं चेति । न चैतद्युक्तं मुनिभिरनुक्तत्वात् । तथा च परा-

शर: ॥ केन्द्रादिषु स्थिता लग्नात्षष्ठि: विंशतिथि: क्रमादिति । आचार्येणाप्युक्तम् । अत्र के चिद्ग्रहफलषड्भागकल्पनया त्रैराशिकमिच्छन्ति । तदप्ययुक्तमिति क्व चित्पुस्तके तदपि युक्तमिति दृश्यते तल्लेखकदोषात्पतितमिति बोध्यम् । अत: सूर्यगणेशदामोदरादिभिर्भावस्वीकरणं कृतं तदाचार्यवचनविरुद्धत्वाद्बुधस्याप्यनुपातेन नतोन्नतबलसाधनमित्युपेक्षणीयम् ॥

इदानीं द्रेष्काणबलमाह ॥

## स्त्रीखेटौ चरमे नरा: प्रथमके क्लीबौ च मध्ये
## तथा द्रेष्काणे वितरन्तिपादम् ॥

स्त्रीखेटौ चन्द्रशुक्रौ यत्र कुत्रापि राशौ चरमे तृतीयस्मिन् द्रेष्काणे स्थितौ पादं बलं दत्त: । नरा: सूर्यभौमगुरव: प्रथमके द्रेष्काणे पादं बलं वितरन्ति ददति । क्लीबौ नपुंसकाख्यौ बुधशनी मध्ये द्रेष्काणे पादं बलं ददाते । अत्रोपपत्ति: । पराशर: । आदिमध्यावसानेषु द्रेष्काणेषु स्थिता: क्रमात् । पुंनपुंसकयोषाख्या दद्युस्त्रिथिबलं ग्रहा इति ॥ सारावल्यामपि । पुंस्त्रीनपुंसकाख्या: क्षेत्रेष्वाद्यन्तमध्यसंप्राप्ता: । बलिन इति । अत: केशवश्रीपत्यादिभिराचार्यैर्यदुक्तं तत्सम्यगेव । यत्तु होरामकरन्दे । क्षेत्रादिमध्यान्तगता नृयोषिन्नपुंसकाख्या बलिन: क्रमेणेति गुणाकरेणोक्तं तद्भ्रान्तिविलसितम् । यद्यपि विज्ञानशून्येन ज्ञानराजसुतेन सूर्येण श्रीपतिपद्धतिटीकायामेतदाचार्यै: केषां चिन्मतमङ्गीकृतम् । यतो दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ । रविसुतशशिनौ विनिर्गमस्थौ शशितनय: फलदस्तु सर्वकालमिति ब्रुवतां वराहादीनामनभिमतमित्यवादि तदप्यसत् । दिनकररुधिरावित्यादिवराहवाक्यस्याष्टवर्गफलविषयत्वात् । उत्पलेनाप्येवमेवोक्तम् । अतो वराहादीनामाशयमजानता सूर्येण यदभिधायि तदयुक्तमिति सिद्धम् ॥

अथोपसंहरति ॥

**उदितं स्यात्स्थानवीर्यं त्विदम् ॥**

इद यत्पञ्चधा बलमुदितं कथितं तत्स्थानवीर्यं स्यात् । पञ्चानां योगे स्थानबलं स्यादित्यर्थः । अमुमेवार्थं प्रकटयितुं तुशब्दोपादानमपीति बोध्यम् ॥

एवं सभेदं स्थानबलमुक्त्वाधुना क्रमप्राप्तदिग्बलमाह ॥

**मन्दाल्लग्नमिनात्कुजाच्च हिबुकं शोध्यं विधोर्भार्गवा-**
**च्चाध्यं ज्ञाङ्गिरसोस्तमच्च रसभात्पुष्टं त्यजेच्चक्रतः ।**
**दिग्वीर्यं रसहृत्तु ॥**

स्पष्टम् । तुशब्दोऽचभजनविधिरुच्चबलानयने प्रागुक्तः स एवेति ज्ञापनार्थम् ॥ अथोपपत्तिः ॥ दिग्बलं नाम यो ग्रहो यस्यां दिशि बलवानुक्तस्तदुत्पन्नं बलम् । एवं ग्रहाणां दिक्सम्बन्धेन बलोत्कर्षापकर्षौ मिहिरागमप्रामाण्यतः सिद्धौ । तदुक्तं वराहमिहिराचार्यैः । दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्यसुतः सितशीतकरौ चेति । एवं ग्रहाणां दिक्क्रमस्तु राशिचक्र एव कल्पनीयो भवति तथा लग्नचतुर्थसप्तमदशमभावाः सव्यक्रमेण पूर्वोत्तरपश्चिमयाम्यदिक्स्थानीया इति प्रत्यक्षतो लक्ष्यन्ते । यतः क्रान्तिमण्डलक्षितिजसम्पातोपलक्षितस्य प्राग्लग्नस्य सूर्योदयादितः प्रवृत्तिर्दृष्टा सूर्योदयस्तु प्राच्यामेवेति लग्नस्य पूर्वदिक्स्थानीयत्वम् । तथैव प्रत्यक्क्षितिजेऽवस्थितस्यास्तलग्नस्य पश्चिमदिक्स्थानीयत्वम् । अथ लग्नास्तोपलक्षितयोः प्रागपरयोर्मध्ये सव्यदक्षिणस्थितयोश्चतुर्थदशमभावयोः क्रमेणोत्तरदक्षिणदिक्स्थानीयत्वम् । तत्र यथोक्तदिशि ग्रहस्य संपूर्णं बलं ततो यथायथा विप्रकर्षस्तथातथा बलस्य ह्रासः । परमविप्रकर्षे बलाभावलक्षणः परमो ह्रासो युक्तः । परमविप्रकर्षस्तु यथोक्तदिक्स्थानः क्रान्तिवृत्तार्द्धे निजनिजसप्तमभावात्मके । अथानुपातः । बलाभावलक्षणा

द्यग्रोक्तभावादर्वागयतोऽपि क्रमेण बलस्योपचये पड्भागैर्भिः संपूर्णं रूप बलं भवतीति ग्रहाद्बलाभावलक्षणं भावं विशोध्य शेषं षड्भाग्यल्पं षड्भिर्भक्तं फलं दिग्बलम् । षड्भाधिके तु शेषे चक्राद्विशोधिते बलाभावलक्षणाद्भावादर्वाचीनराश्यादिः शिष्यत इत्यसौ षड्भक्तः फलं दिग्बलमिति सुगमम् । अत्र शेषं राश्यादिदशगुणं लवादितो द्विगुणं च षष्ट्यंशाद्यं बलं स्यादिति सुगमोपायो वेद्यः ॥

अथ कालबलं निरूपयिषुस्तावन्नतोन्नतबलमाह ॥

## अथो समयजं रूपं सदा स्याद्विदस्त्रिंशद्धक्तनतोन्नते शशिकुजार्कीणां परेषां बले ॥

अथो इति । दिग्बलकथनानन्तरं समयजं कालजं बलमुच्यते । विदः बुधस्य सदेति दिनरात्रौ च रूपं बलं स्यात् । त्रिंशद्भक्तनतोन्नते शशिकुजार्कीणां परेषां च बले भवतः । नतं च उन्नतं च नतोन्नते त्रिंशता भक्ते त्रिंशद्भक्ते । त्रिंशद्भक्ते च ते नतोन्नते च त्रिंशद्भक्तनतोन्नते । अथैतदुक्तं भवति । प्रागानीतं नतं घटिकाद्यं त्रिंशद्भक्तं सचन्द्रभौमशनीनां बल भवेत् । उन्नतं त्रिंशद्भक्तं सत्परेषां रविगुरुशुक्राणां बलं स्यात् । अथ युक्तिः । बृहज्जातके । निशि शशिकुजसौराःसर्वदाज्ञोऽह्नि चान्य इति । बुधः सर्वदा रात्रौ दिनेऽपि बली । चन्द्रभौमशनीना रात्रौ बलमर्थादेवाचान्येषां बलाभावः । रविगुरुशुक्राणां दिवसे बलमर्थादन्येषां बलाभाव इति दिनकरकरनिकरप्रकाशशालित्वलक्षणस्य दिनस्य मध्याह्ने दिनकरप्रकाशोत्कर्षशालित्वादुत्कर्षता ततो दिनबलानामिह संपूर्णं रूप बलम् । नक्तंबलानां त्वत्र बलाभावः । एवमर्द्धरात्रस्य महानिशात्वान्निशायामर्द्धरात्रस्य महत्त्यम् । अतो रात्रिबलाना रूपं बलम् । अथ दिनबलानां तु बलाभावः । मध्याह्ने उन्नतं परमं मध्यरात्रे तु नतं परममिति प्रसिद्धम् । अतः सिद्धमेतत् । उन्नतपरमत्वे दिनबलानां बलपरमत्वम् । उन्न-

ताभावे बलाभाव इति । एवं नतपरमत्वे नतबलानां बलपरमत्वं नताभावे बलाभाव इति । अथानुपातः । यदि त्रिंशत्तुल्याभिर्नतोन्नतघटीभी रूपमिते बले लभ्येते तदेष्टनतोन्नतनाडीभिः किमिति । नतोन्नते त्रिंशद्भक्तेमती निशादिनबलवतां वीर्यं क्रमाद्भवत इति युक्तम् । अत्र लाघवार्थं पद्यं मयोक्तम् ॥ द्विघ्नं नतं प्राक्परिसाधितं यत्तमीशसौर्यारबलं भवेत्तत् । षष्टिच्युतं स्यादितरग्रहाणामहर्निशं ज्ञस्य तु षष्टिरेव ॥ १ ॥ अत्र केन चिन्मन्दमतिना निजनिजाहोरात्रवशाद्ग्रहाणां नतं साध्यमित्युक्तं तन्निवारणाय प्राक् परिसाधितमित्युक्तम् । सूर्यस्येति यावत् । तथा बुधस्यापि नतोन्नतानुपातेन बलं साध्यमित्युक्तं तद्वारणाय षष्टिरेवेत्युक्तम् । शेषं स्पष्टम् ॥

अथ पक्षबलमाह ॥ १ ॥

शुक्लेऽन्त्ये तिथि१५हृद्गतैष्यतिथयो वीर्यं सतां भूच्युतं
पापानां द्विगुणं विधोरिदम् ॥

शुक्ले शुक्लपक्षे अन्त्ये कृष्णपक्षे तिथिभिः पञ्चदशभिः १५ ह्रियन्ते भज्यन्ते ते तथा तादृशागतैष्यतिथयः सतां शुभग्रहाणां चन्द्रगुरुशुक्राणां पापवियुतस्य बुधस्य च वीर्यं स्यात् । तदेव वीर्यं भुवः रूपात् च्युतं शुद्धं सत्पापानां सूर्यभौमशनीनामेतेषामन्यतमेन युतस्य बुधस्य च वीर्यं स्यात् । एतदुक्तं भवति । शुक्लपक्षे गताः सावयवास्तिथयः पञ्चदशभक्ताः सतां बलं स्यात् । कृष्णपक्षे एष्याः गम्याः सावयवतिथयस्तिथिभक्ताः सतां बलं स्यात् । तद्वीर्यं रूपाच्छोधितं पक्षद्वयेपि पापानां बलं स्यादिति । इदं पक्षवीर्यं विधोश्चन्द्रस्य द्विगुणं कार्यम् । अथ गतैष्यतिथिसाधनमुच्यते । सूर्योनचन्द्रस्यांशा द्वादशभक्ताः गतास्तिथयो भवन्ति । शेषं भागादिगतं तत्षष्टिगुणं कृत्वा पुनर्द्वादशभिर्भजेत् । लब्धं जन्मसमये वर्तमानतिथ्याश्चान्द्रा गतघटिकाः स्युः । पुनः शेषं षष्टिगुणं विधाय द्वाद-

षष्ठमक्तं पलानि । एवमग्रेऽपि । तथा कृते चान्द्राः सावयवा गततिथयो भवन्ति । परं यदि शुक्लपक्षे जन्म स्यात् । यदि तु कृष्णपक्षे जन्म तदा ता एव गततिथयस्त्रिंशच्छुद्धा ग्राह्याः सावयवास्तिथयो भवन्तीति ज्ञेयम् । प्रतिपदमारभ्य पूर्णिमान्तं यावच्छुक्लपक्षः पूर्णिमान्तादमान्तपर्यन्तमसित इति प्रसिद्धमेव । सूर्योनचन्द्रस्य लवार्कभागो गता तिथिः षड्गुणाद्यशेषात् । द्विचन्द्र१२लब्धं घटिकादिचान्द्रं भवेदिदं पक्षबलस्य सिद्धौ ॥ कृष्णे तु पक्षे खगुणच्युतासौ गता तिथिः सावयवाऽगता स्यात् । गतविकलाः सूर्येन्दुगत्यन्तरेण भक्ताः सत्यो गतघटिकाः करणादौ साधितास्ता नात्रोपयुज्यन्त इति न साध्याः । मासास्तथात्र तिथयस्तुहिनांशुमानादित्युक्तेस्तिथिशब्देन चान्द्रदिनस्यैव वाच्यत्वाच्चान्द्र्योघटिकाः साध्या इति यदुक्तं तदुक्तम् । करणादौ तु चान्द्रघटीनामज्ञातत्वात्सावनादेव व्यवहारसिद्धेः सावना घटिका आनीता इति बोद्धव्यम् । एतदन्यैर्होराशास्त्रप्रणेतृकारैरनुक्तमपि मयैव पार्थक्येनोदितमित्यवधेयम् । ननु क्षीणेन्दोः पापत्वाभिधानात्कथं चन्द्रस्य शुभत्वमेव व्याख्यातम् । न च चन्द्रस्य साहजिकशुभत्वाच्छुभत्वमेवाद्रियत इति वाच्यम् । विनिगमनाविरहाद्बुधस्यापि शुभत्वाङ्गीकारापत्तेरिति चेत् । मैवम् । चन्द्रस्य च यवनेश्वरवाक्यबलाच्छुभत्वमेवाङ्गीक्रियते बुधस्य तु सर्वसंमतत्वाद्यथोक्तैव व्यवस्था । तथा च यवनेश्वरः ॥

क्रूरग्रहोऽर्कः कुजसूर्यजौ तु पापौ शुभाः शुक्रशशाङ्कजीवाः ।
सौम्यन्तु सौम्यो व्यतिमिश्रितोऽन्यैः पापैश्च तुल्यप्रकृतित्वमेति ॥ १ ॥
मासे तु शुक्लप्रतिपत्प्रवृत्तेः पूर्वे शशी मध्यबलो दशाहे ।
श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैश्च दृष्टो बलवान्सदैव ॥ २ ॥

तस्माद्यवनेश्वरमते चन्द्रस्य शुभत्वमेवेति सिद्धम् । यदात्र चन्द्रस्य पापत्वं यवनेश्वरस्याभिप्रेतं स्यात्तदा तृतीये दशकेऽल्पबल इति नोक्तमेव स्यात् । तस्मात्क्षीणेन्दुः पाप इत्यन्येषां मतम् । अत्र

मतभेदे पद्धतिकारैर्यवनेश्वरमतमेवाङ्गीकृतम् । यतश्चन्द्रस्य चेष्टाकेन्द्रजं बलं शुक्लपक्षबलं च सममेव भवतीति पक्षवीर्यं चन्द्रस्य द्विधमुक्तम् । चेष्टाबलपक्षबलसाम्यं तु चन्द्रस्य पापत्वाङ्गीकारे न सङ्गच्छते । तथा हि । पूर्णिमान्ते गततिथयः पञ्चदश १५ एते पञ्चदशभक्ता जातं पक्षबलं रूपम् । १ तथा व्यर्केन्दुः राशिषट्कं ६ षड्भक्ता जातं चेष्टाबलमपि रूप१मेव । अथ दर्शान्ते गम्यतिथिः पूर्णम् । अतः पक्षबलाभावः व्यर्केन्दुरपि पूर्णम् । अतश्चेष्टाबलाभावेऽपि । अतश्चेष्टाबलपरमत्वे पक्षबलपरमत्वं चेष्टाभावे पक्षबलाभाव इति सिद्धम् । क्षीणेन्दोः पापत्वस्वीकारे तु भूच्युतं पापानामिति रूपं पक्षवीर्यं दर्शान्ते समायाति । नेदं युक्तम् । यतश्चेष्टाबलाभावात्तथास्याप्यभावेन भवितव्यम् । अतः पद्धतौ सर्वत्र दृग्बलानयने चक्रार्द्धहानौ तनुगे खल एवमादिस्थले चन्द्रस्य शुभतैव । बुधस्य तु यथाप्राप्ता पापता शुभता वा ग्राह्या । एवं मतेऽरिष्टयोगादौ यत्रेन्दोः पापत्वाभिधानं तत्र क्षीणेन्दूपलक्षकं वेद्यमिति दिक् । अथ सुन्दरमिश्रवाक्यम् । सदा शुभस्यैव विधोर्द्विनिघ्नं पक्षस्य वीर्यं गणकैर्निरुक्तम् । सर्वत्र पापाः कुजसूर्यमन्दाः पापैर्युतौ चोऽपि परे शुभाः स्युरिति ॥ अथोपपत्तिः । बृहज्जातके । बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण । कृष्णपक्षे पापानां बलं शुभानामर्थाद्बलाभावः । शुक्लपक्षे शुभानां बलमर्थात्पापानां बलाभावः । तत्र प्रतिदिनमुपचीयमानकलाकलापकलानिधिलक्षणस्य शुक्लस्य पक्षस्य पौर्णमास्यन्ते सकलकलोपचयादुत्कृष्टता । अतस्तत्र शुभानां बलं परमं रूपमितम् । गततिथयोऽपि परमाः पञ्चदश १५ शुक्लप्रतिपदादौ तु बलाभावस्तत्र गततिथ्यभावोऽपि । अतोऽनुपातः । यदि पञ्चदशभिर्गततिथिभी रूपं बलं तदेष्टाभिः किमिति । गततिथिनिघ्नि १५ भागः शुक्लपक्षे सतां बलं स्यादित्युपपन्नम् । एवं य एव पूर्णिमान्तः स एव कृष्णपक्षादिरिति कृष्णपक्षादौ रूपं बलम् । १ । तत्रैष्यतिथयः पञ्च-

दश १५ परमाः । अमावास्यान्ते शुभानां बलाभावस्तथैव्यतिथ्य-भावश्च । अतोनुपातेनैष्यतिथिपञ्चदशांशः कृष्णपक्षे सतां बलं स्यादित्युपपन्नम् । एवं शुक्लकृष्णपक्षयोरैष्यगततिथ्यनुपातेन क्रूराणामपि बलं साधनीयम् । तत्राचार्यैर्लाघवाच्छुभबलमेव भूच्युतमुभयोरपि पक्षयोरशुभानां बलं स्यादित्युक्तम् । उपपन्नमेतत् । यतः सितादेरशुभबलमपचीयते शुभबलं तूपचीयते कृष्णादितस्तु शुभबलमपचीयते क्रूरबलमुपचीयते यावानेवोपचयस्तावानेवापचय इति । उपचयापचयौ तु रूपमध्य इति रूपात् च्युतं शुभबलमशुभबलं स्यादिति । सदा शुभस्यैव विधेः पक्षबलं वक्ष्यमाणचेष्टाकेन्द्रोत्थचेष्टाबलेन सममेव जायत इति पुनस्तयोर्योगे क्रियमाणे द्विघ्नमेव भविष्यतीति पूर्वमेव द्विघ्नं कार्यमित्युक्तम् । एवं सूर्यस्यायनबलमपि चेष्टाबलेन तुल्यत्वात् द्विगुणं कार्यमित्यग्रे प्रतिपादयिष्यते । अर्कस्य दृग्घ्नमिति । अतः पुष्पवतोश्चेष्टाबले वीयक्ये क्रियमाणे सति न योज्ये पूर्वमेव योजितत्वादत एव वक्ष्यते । प्राग्वन्न वीर्यायत्ते इति सर्वं निरवद्यम् । पक्षवीर्यसाधनं सुगमोपायेनोक्तं वराहरेण । चन्द्रादर्कं विशोध्य च । अष्टाधिके विशोध्यार्कादृगीकृत्य त्रिभिर्भजेत् । पक्षजं बलमिन्दुबुधशुक्रार्याणां तु षड्भितः ॥ हित्वान्येषामिति । अत्रापि चन्द्रगुरुशुक्रार्याणां यद्बलं तदेवेन्दोः पक्षद्वयेपि बलमित्यर्थलाभात् क्षीणचन्द्रः शुभ एवेति प्रौढं निर्व्यूढम् । अस्योपपत्तिस्त्वैराशिकेनाच्युबलवत्सुगमा ।

अथ व्यंशबलमाह ॥

**अथाह्नस्त्र्यंशकेषु क्रमात् । सौम्यार्कार्कभुवां**
**निशः शशिसितारार्णां च रूपं सदेज्यस्य ॥**

अथेति । पक्षबलानन्तरम् । अह्नो दिनस्य त्र्यंशकेषु सौम्यार्कार्कभुवां क्रमादूपं बलं स्यात् । सौम्यो बुधः । अर्कः सूर्यः । अर्कभूः शनिः । तेषां सौम्यार्कार्कभुवामित्यत्र द्वन्द्वसमासः निशः रात्रेस्त्र्यंशकेषु

क्रमात् शशिसितारायां चन्द्रशुक्रभौमानां रूपं बलं स्यात् । चकारः समुच्चये । ईज्यस्य बृहस्पतेः सदेति दिवानिशं यत्र क्वापि त्र्यंशे रूपं बलं स्यात् । एतदुक्तं भवति । प्रथमतो दिने रात्रौ वा जननमस्तीति विज्ञाय ततस्तन्मानस्य त्रेधा विभागं विधाय यस्मिन्नंशे जन्म तदंशपते रूपं बलं गुरोस्तु सदैव रूपं बलं ग्राह्यमिति । अत्र प्रोक्तग्रहाणां दिनरात्रित्रिभागबलं होरागमप्रमाणसिद्धम् । तदुक्तं होरामकरन्दे । निशामुखे शीतरुचिर्बलीयान्भृगुर्निशीथे कुसुतो निशान्ते । प्रातर्बुधो मध्यदिने दिनेशः शनिर्दिनान्ते धिषणः सदैवेति ॥ १ ॥

अथ वर्षेशादिबलमाह ॥

अथाङ्घ्रिचयाद्बली किल समामासद्युहोरेश्वर इति ॥ ९ ॥

अथशब्द आनन्तर्ये । समामासद्युहोरेश्वरः अङ्घ्रिचयात्पादवृद्ध्या बली स्यात् । समा वर्षे मासः प्रसिद्धः द्युदिनं द्युइत्यव्ययं दिनशब्दवाचकमिति क्षीरस्वाम्यादयः । होरा कालहोरा आसामीश्वरः स्वामी अङ्घ्रिचयाद्बली वर्षेशस्य पादो बलं मासेशस्यार्द्धं दिनेशस्य पादत्रयं होरेशस्य रूपं बलमित्यर्थः । किलेत्यागमप्रामाण्यसूचनार्थम् । वर्षमासेशयोरानयनमुक्तं केशवसांवत्सरैः स्वकृतटीकायाम् । तद्यथा । द्विघ्नो द्युपिण्डो रदभूयुतोऽर्कयुक् खाङ्गाग्निहृत्खाग्निहृतः फले युते । वेदैर्गुणैस्त्रिद्विहतेऽद्रिशेषितेऽर्काद्ब्रह्मतुल्ये करणेऽब्दमासपौ ॥ १ ॥ अस्यार्थः । ब्रह्मतुल्ये करणे द्युपिण्डोऽहर्गणः द्विघ्नः एकत्र रदभूमिर्द्वात्रिंशदधिकशतेन युतः अपरत्र अर्कद्वादशभिर्युक् युक्तः कार्यः । आद्यः खाङ्गाग्निभिः षष्ट्यधिकशतत्रयेण हृत् भक्तः । अपरः खाङ्गाग्निभिस्त्रिंशता हृतः । उभे फले क्रमेण वेदगुणैर्युते सतत्रिद्विहते अद्रिशेषिते अकाद्वर्षे अर्कभारभ्य गतौ वर्षमासेशौ भवतः ।

अत्र प्रकृतस्यायं प्रामादिकः । अतस्त्रिद्विहता द्रुशेषिते -स । ब्रह्मतुल्ये रविसोऽब्दमासपाविति पाठः पाठ्यः । त्रिद्विहते च ते अद्रिशेषिते चेति विग्रहः । फल इति सप्तम्यन्तं कृत्वा यथाश्रुतमेव व्याख्येयमिति

या। अत्रोपपत्तिः ॥ सावनवर्षमासेशौ साध्येते। तत्र तावत्कल्पादेः सकाशाज्जन्मदिनजार्कोदयपर्यन्तमहर्गणः साध्यः। ततो यदि दिनानां षष्ठ्यधिकशतत्रयेण ३६० त्रिंशता चैकं वर्षमेको मासश्च क्रमेण लभ्यते तदेष्टाहर्गणेन किमित्यभीष्टाहर्गणः खाङ्गाग्निहृत्खाग्निहृतः फले सावनानि गतवर्षाणि सावना गतमासाश्च भवन्ति। यद्येकेन वर्षेणैकेन मासेन चैकमितो वर्षेशो मासेशश्च क्रमेण लभ्यते तदेष्टैर्वर्षैर्मासैश्च किमित्यभीष्टवर्षमासतुल्या एव तदीशास्ततो वाराः सप्तैवेति सप्त तष्टाः शेषं वर्षेशमासेश्वरौ भवत इत्युपपन्नम्। अथैतौ कस्माद्वासराद्गणनीयाविति चिन्त्यते। कल्पादौ वर्षेशो रविरासीत्ततो द्वितीयवर्षे बुधस्तृतीयवर्षे शनिरतो रवेरधः कक्षाक्रमेण तृतीयस्तृतीयो वर्षेश इति। एतदुक्तं भवति। कल्पगतसावनवर्षगणेऽद्रितष्टे यदि शून्यं शेषं तदा सूर्योऽब्दपो यद्येकस्तदा बुध इत्यादि। एवं कल्पादौ मासेशो रविस्ततो द्वितीये मासि मासेशो भौमस्तृतीये गुरुरतो रवेरूर्ध्वं कक्षाक्रमेण द्वितीयो मासपतिरित्यवधेयम्। उक्तं च सूर्यसिद्धान्ते ॥

वर्षाधिपतयस्तद्वत्तृतीयाः परिकीर्तिताः।
ऊर्ध्वक्रमेण शशिनो मासानामधिपाः स्मृता इति ॥

तद्वदिति मन्दादधःक्रमेणेत्यर्थः। शतानन्दोऽपि ॥

शास्त्रादिसौराब्दगणात्कलेर्वा वर्षाधिपाः सप्तहृतावशेषाः।
शुक्रेन्दुवाचस्पतिसूर्यसौम्यशनैश्चरारः क्रमशो भवन्ति ॥ १ ॥
अब्दोऽर्कनिघ्नो रविमासयुक्तः सप्तावशेषो रविमासनाथाः।
भृगुज्ञसूर्यारसुरेज्यसौरिचन्द्रा युगात्सावनमासतोऽन्ये ॥ २ ॥

सूर्यादिभिः सावनवर्षमासनाथयोः साधितत्वात्साधितौ सौरवर्षमासपती सूर्यादुत्क्रमेण गणनीयाविति सिद्धम्। अहर्गणादायुर्द्दायचक्रजनप्रसिद्धरविचन्द्रभौमबुधेत्यादिक्रमेण वारगणनाया उ-

त्स्यात् । अत्र तु तदन्यथाभावे शिष्याः क्लिश्येरन्निति यथा तेनैव क्रमेण वर्षमासपत्योर्गणना विधातुं शक्यते तथा यतितमाचार्यचरणैः । तद्यथा । कल्पादौ रविर्वर्षस्वामी ततो द्वितीयवर्षे वर्षेशो बुधस्तयोः प्रसिद्धक्रमे त्रिमितमन्तरमेवं प्रथमाधिमासस्वामिनोर्द्विमितमन्तरमतोऽनुपातः । यद्येकेन वर्षेण मासेन च त्रिद्विमितेऽन्तरे लभ्येते तदेष्टवर्षमासैश्च किमिति । उक्तं च सूर्यसिद्धान्ते । मासाब्ददिनसंख्याप्तं द्वित्रिघ्नं रूपसंयुतम् । सप्तोद्धृतावशेषौ तु विज्ञेयौ मासवर्षपौ ॥ अतः कल्पगताः । वासिष्ठेऽपि । मासेसमादिनभक्ताद्द्युगणाल्लब्धं पृथग्यमगुणघ्नम् ॥ सैकं च सप्तभक्तं मासपमाधीश्वरावर्कात् । सोमसिद्धान्तेऽपि । द्युगणात्त्रिंशता षड्भ्रषष्ट्याद्वित्रिहते फले ॥ सैके सप्तावशेषिते मासवर्षपती क्रमादिति । वर्तमानगणनार्थं सैकमित्युक्तमत्र । अहर्गणो द्विष्ठः खाङ्गाग्निहृत्खाग्निहृतः फले त्रिद्विहते अद्रिशेषिते अर्कादृतौ वर्षमासपती प्रसिद्धक्रमेण भवत इत्युपपन्नम् । अत्राचार्येण लाघवार्थं दिनगणस्य खण्डद्वयं कृतम् । एकं कल्पादेर्ब्रह्मतुल्यकरणादिपर्यन्तम् । अपरं ब्रह्मतुल्यादेर्जन्मदिनवार्कोदयावधि । यदेव द्युगणस्य द्वितीयखण्डं स एव ब्रह्मतुल्याहर्गण इति प्रसिद्धतरम् । अतो द्विष्ठो ब्रह्मतुल्यद्युपिण्डः खाङ्गाग्निहृदित्याद्युपपन्नम् । परमेतौ वर्षमासेशौ ब्रह्मतुल्यादिवाब्दमासेशाभ्यां भवतोऽपेक्षितौ तु रविवारादितोऽतः क्षेपान्वितौ कार्यौ तत्र क्षेपः साध्यते । कथितकल्पगतोऽर्कसमागणो रविगुण इत्यादिप्रकारेण ब्रह्मतुल्यादौ साधितोऽहर्गणः करयमयुगसप्ताभ्राभ्रषड्द्विषट्पक्षद्वितुरग ७२०६३२६०००७४५२ प्रमितः ॥ अयं षष्ट्यधिकशतत्रयभक्तो लब्धा गताब्दाः सावनाः । २००१७६६६८० शेषं रदभूतुल्यम् । १३२ गताब्दास्त्रिगुणाः सप्तभक्ताः । शेषं पञ्च ५ अतो मन्यादितस्त्रिगुणवर्षेषु पञ्चमितः क्षेपो योज्यस्ततः सप्तहृते सूर्यादितोऽब्देशः स्यादिति युक्तम् । यदि तु केवलवर्षेष्वेव क्षेपो योज्यतेऽनन्तरं त्रिभिर्गुण्यते तदा क्षेपस्त्रिगुणो

या। अथोपपत्तिः॥ सावनवर्षमासेशौ साध्येते। तत्र तावत्कल्पादेः सकाशाज्जन्मदिनजार्कोदयपर्यन्तमहर्गणः साध्यः। ततो यदि दिनानां षष्ट्यधिकशतत्रयेण ३६० त्रिंशता चैकं वर्षमेको मासश्च क्रमेण लभ्यते तदेष्टाहर्गणेन किमित्यभीष्टाहर्गणः खाङ्गाग्निहृत्खाग्निहृतः फले सावनानि गतवर्षाणि सावना गतमासाश्च भवन्ति। यद्येकेन वर्षेणैकेन मासेन चैकमितौ वर्षेशो मासेशश्च क्रमेण लभ्यते तदेष्टैर्वर्षैर्मासैश्च किमित्यभीष्टवर्षमासतुल्या एव तदीशास्ततो वाराः सप्तैवेति सप्त तष्टाः शेषं वर्षेशमासेश्वरौ भवत इत्युपपन्नम्। अथैतौ कस्माद्वासराद्गणनीयाविति चिन्त्यते। कल्पादौ वर्षेशो रविरासीत्ततो द्वितीयवर्षे बुधस्तृतीयवर्षे शनिरतो रवेरधः कक्षाक्रमेण तृतीयस्तृतीयो वर्षेश इति। एतदुक्तं भवति। कल्पगतसावनवर्षगणेऽद्रितष्टे यदि शून्यं शेषं तदा सूर्योऽब्दपो यद्येकस्तदा बुध इत्यादि। एवं कल्पादौ मासेशो रविस्ततो द्वितीये मासि मासेशो भौमस्तृतीये गुरुरतो रवेरूर्ध्वं कक्षाक्रमेण द्वितीयो मासपतिरित्यवधेयम्। उक्तं च सूर्यसिद्धान्ते॥

वर्षाधिपतयस्तद्वत्तृतीयाः परिकीर्तिताः।
ऊर्ध्वक्रमेण शशिनो मासानामधिपाः स्मृता इति॥

तद्वदिति मन्दादधःक्रमेणेत्यर्थः। शतानन्देऽपि॥

शास्त्रादिसौराब्दगणात्कलेर्वा वर्षाधिपाः सप्तहृतावशेषाः।
शुक्रेन्दुवाचस्पतिसूर्यसौम्यशनैश्चरारा: क्रमशो भवन्ति॥ १॥
अब्दोऽर्कनिघ्नो रविमासयुक्तः सप्तावशेषो रविमासनाथाः।
चशुक्रसूर्यारसुरेज्यसौरिचन्द्रा युगात्साधनमासतोऽन्ये॥ २॥

सूर्यादिभिः सावनवर्षमासनाथयोः साधितत्वात्साधितौ सौरवर्षमासपती सूर्याद्युत्क्रमेण गणनीयाविति सिद्धम्। अहर्गणादायुर्द्वायचजनप्रसिद्धरविचन्द्रभौमबुधेत्यादिक्रमेण वारगणनाया उ-

जन्म स एव दिनेश इति स्पष्टम् । अत्र वारप्रवृत्तिरर्कोदयादेव न तु गणितसाधितवारप्रवृत्तिकालात् । यत्तु रत्नावल्याम् । वारप्रवृत्तेर्जननोत्यथवा: प्रकल्पनीयः स दिनाधिनाथ इति गणेशेनोक्तं तदयुक्तं मुनिमतविरोधात् । तथा च वसिष्ठसंहितायाम् ॥ वारप्रवृत्तिविज्ञानं चरणवारार्थमेव तत् । अन्येषु सर्वकार्येषु दिनादिरुदयो रवेरिति ॥ १ ॥ यद्गणितेन वारप्रवृत्तिसाधनं कृतं तत्क्षणवारार्थं कालहोरासाधनार्थमित्यर्थः । अन्यकार्येषु सूर्योदयादेव वारस्य प्रवृत्तिरिति । होरेश्वरानयनं वसिष्ठसिद्धान्ते । प्रभाकरस्योद्गमनात्पुरे स्याद्वारप्रवृत्तिर्दशकन्धरस्य । चरार्द्धदेशान्तरनाडिकाभिरूर्ध्वं तथाधोऽप्यपरञ्च तस्मात् ॥ १ ॥ वारप्रवृत्तेर्घटिका द्विनेशात्कालाख्यहोरापतयः क्रमेण । सार्द्धेन नाडीद्वितयेन २ । ३० षष्ठः षष्ठश्च षष्ठश्च पुनःपुनश्चेति ॥ २ ॥ स्वार्कोदयाद्येन कालेन प्रागूर्ध्वं वा लङ्कार्कोदयः स कालो वारप्रवृत्तिकाल इति स्पष्टम् । सौरमते तु लङ्कार्द्धरात्रे सृष्टिरिति स्वार्द्धरात्रान्तराभावेन केवलदेशान्तरघटीभिरेव प्रागूर्ध्वं वा वारप्रवृत्तिरित्युक्तं सूर्यसिद्धान्ते । तद्देशान्तरनाडीभिः चपार्द्धाभ्यधिकोनक इत्यादिना । वसिष्ठादिमुनिब्रह्मगुप्ताद्याचार्यमताविरोधाय मध्यरात्रादित्यध्याहृत्य तस्माद्देशान्तरनाडीभिः प्राक्परत्वाद्देशयुक्तोने चपार्द्धमिते काले वारप्रवृत्तिः । परमत्र चपार्द्धपदं निरक्षचपार्द्धविषयमित्यनेन सौरभाष्येऽस्मत्पितृचरणैः सम्यग्व्याख्यातम् । एवमनेन प्रकारेण होरेशो ज्ञेय इति प्राञ्चः । केचित्तु तत्कालार्कोन्यूनलग्नांशपिण्डो भक्तः पञ्चदश १५ भिर्भुक्तहोरा इत्यनेन होरेशमाहुः । अत्रैवं मतद्वयेऽर्कलग्नान्तरसाधितो होरेशोऽत्र पद्धतौ ग्राह्य इत्यस्मद्गुरूणां मतम् । एतदेव युक्तमुत्पश्यामः । तथा हि । भवनस्यार्द्धं होरेत्युक्तेर्दिनावसानसमये षड् लग्नानि व्यतीतानि भवन्ति । तदर्द्धानि च द्वादशतुल्यानीति द्वादशैव होरा युक्तास्ता एव तत्कालार्कोन्यूनलग्नांशपिण्ड इत्यनेनायान्तीत्ययमेव होरासाधनप्रकारोऽत्र होराशास्त्रे ग्राह्य इति युक्तम् । न चाने-

योजितो भविष्यतीति विभक्तः क्षेपो योज्यः । अत्र पञ्चमिते क्षेपे विभक्ते निरग्रं फलं नायातीति पञ्चसु सप्त संयोज्य त्रिभिर्भागे गृहीते लब्धाश्चत्वारः ४ अतो वेदैर्युतमिति युक्तम् । एवं द्युगणस्त्रिंशद्भक्तो लब्धागतमासाः सावनाः २४०२१२००२४८ । शेषमर्के १२ तुल्यम् । गतमासाद्द्विगुणाः सप्तभक्ताः शेषं षट् ६ अतो द्विघ्नमासेषु षण्मितः । क्षेपः क्षेप्यस्तत्र सप्ततष्टे सूर्याद्गतो मासेशः स्यात् । अथाचार्यैः केवलवर्षेष्वेव क्षेपो योजित इति द्वाभ्यां भक्तो जातास्त्रयः । अतो गुणैर्युतं फलमित्यपि साधु । यद्वा । सावनवर्षान्ते यो वारः सोऽब्दपतिः सावनमासान्ते वारो मासेश इति । अहर्गणः षष्ट्यग्निभक्तः खाग्नि-भक्तश्च फले सावनवर्षमासा भवन्तीति प्रागुक्त मतेऽनुपातः । यद्येकेन सावनवर्षेण षष्ट्यधिकशतत्रय दिनानि तदेष्टैः किमिति फल मन्यादेः सकाशादिष्टसावनवर्षादिपर्यन्तं सावनदिनानि स्युस्ततो वाराः सप्तेति सप्ततष्टानि कार्याणीति पूर्वमेव लाघवार्थमब्ददिनानि ३६० सप्तभक्तानि शेषं त्रयमतो मन्योदितः सावनाब्दगणस्त्रिभिर्गु-णनीय इत्युपपन्नम् । एवं मासदिनानि ३० सप्तभक्तानि शेषं द्वयमतो मासगणो द्विगुण इति युक्तम् । अस्मिन्मते सूर्यात्प्रसिद्धक्रमेणैव गणनेति सर्वमवदातम् । क्षेपोपपत्तिः प्राग्वदेव । अथाब्दमासशेष-दिनयोगकारणमुच्यते । ग्रहतुल्यकरणादौ सावनवर्षेशः शुक्र आसीत् । वर्षशेषदिनानि रदभूतुल्यानि १३२ अतो मन्यादेरष्टाविंशत्यधिकश तद्वयमितेषु सावनदिनेषु गतेषु सत्सु वर्षेशश्चन्द्र इति ज्ञायते । मन्यादितो वर्षेशानयने वर्षदिन ३६० पर्यन्तं चन्द्रो नायाति । कल्पा द्यहर्गणतो वर्षेशे साध्यमाने मन्यादितो गगनाङ्गगुण ३६० दिन-मध्येऽपि चन्द्रो लभ्यते । अतो मन्यादिजाब्दशेषदिनानि संयोज्य वर्षेश्वरः साध्यः । अन्यथा ग्रहतुल्याहर्गणसाधितवर्षेशस्य क्षेपतुल्यस्य कल्पाद्यहर्गणसाधितवर्षेशतुल्यत्वं भज्येतैव । एवं मासेशेऽपि योज्यम् । एवममुना प्रकारेण जन्मकाले वर्षमासेशौ साध्यौ । अथ, वारे रव्यादिके

चोंशि जिनाश्विनोऽङ्गविकृती खाब्ध्यश्विनः सायनात् ॥ खेटाद्दोर्लवदिग्लवप्रमगतोऽङ्केषो तद्वनागताच्छेषघ्नाद्दशलब्धियुग्दशहृतोंशाद्योऽपमः स्यात्स्वदिक् ॥ १ ॥ अत्रोपपत्तिः ॥ अयनं गमनं तद्वशादुत्पन्नं बलमायनबलमित्यन्वर्थं नाम यत्रायने येषां बलं तदुक्तं सारावल्याम् । उत्तरमयनं प्राप्ताः शुक्रकुजार्कसुरमन्त्रिणो बलिनः ॥ याम्यं शशिरविपुत्रौ द्वे अपि शशिजः स्ववर्गसंस्थश्चेति । उत्तरायणे शुक्रार्ककुजगुरूणां संपूर्णं बलमुक्तं तत्र सायनमिथुनान्ते परमोत्तरगमनात्संपूर्णं बलं संपूर्णता रूपात्मिकेति रूपं बलम् । अथैवैतेषां सायनधनुरन्ते दक्षिणगमनस्य परमत्वाद्बलाभावः । दक्षिणगमनपरमत्वे रूपं बलम् । चन्द्रशन्योः परमोत्तरगमने तु बलाभावः । बुधस्य तु परमोत्तरगमने परमदक्षिणगमने च रूपं बलम् । बलाभावस्थानाद्बलपरमत्वस्थानपर्यन्तं द्विगुणपरमक्रान्त्यंशा गजाम्भोधिमिताः सन्ति । अथ बलाभावस्थानादहोरात्रवृत्तनिष्ठग्रहस्थानस्यान्तरे येऽपमांशास्तैर्बलानयनं कर्तुमुचितमिति चन्द्रशनैश्चरयोर्याम्यक्रान्तौ जिनांशमितायां परक्रान्तौ योजितायां सत्यां सौम्यायां तु वियोजितायां बलाभावस्थानान्तरालेऽपमांशा भवन्ति । कविरविगुरुभौमानां सौम्यक्रान्तौ परक्रान्तौ २४ युक्तायां याम्यायां वियुक्तायां बलाभावस्थानादग्रिमाक्रान्तिर्भवति बलाभावस्थानादेतत्क्रान्तिभागान्तरे खेटोऽस्तीति भावः । बुधस्य तु सौम्यायां याम्यायां च योजितायां भुज्यमानायनादेरग्रिमा क्रान्तिर्भवति । यदाष्टचत्वारिंशद्भागान्तरे ग्रहस्तदा संपूर्णं बलम् । अथानुपातः । यदि बलाभावस्थानान्तरेणाष्टाचत्वारिंशन्मितेन रूपं बलं तदेष्टेन किमिति सर्वमुपपन्नम् । ननु सर्वत्र साध्यस्य परमत्वमभावश्च द्वाविमौ निर्णीय तत्र चान्यस्यापि परमत्वाभावौ निर्णीय तदुभयवशादन्तरेऽनुपातः क्रियते । यथा ग्रहफलाभावे गतिफलं परमं ग्रहफलपरमत्वे गतिफलाभावस्तत्र केन्द्रकोटिज्याया अपि परमत्वाभावौ ततस्तदन्तरे केन्द्रकोटिज्यातोऽनुपातः

प्रागुक्तम् । तत्र चतुर्विंशत्याधवर्तै कृतेऽपक्रमसिद्धांशसंस्कृतमित्यादिप्रकारो निष्पद्यते । नन्वेतदायनबलं स्पष्टक्रान्तित एव साधयितुं युज्यते न मध्यक्रान्तितः । तथा हि । अयने गमनं तदुत्पन्नं बलमायनबलमिति तावत्प्रसिद्धम् । गमनं तु चन्द्रादीनां स्पष्टक्रान्तिवशेनैव भवति । क्रान्तिर्नाम नाडीमण्डलात् क्रान्तिवृत्तावधि दक्षिणोत्तरगमनं क्रान्तिवृत्तादपि दक्षिणोत्तरमन्तरं शरः । तयोः संस्कारे नाडिकामण्डलाद् ग्रहस्य स्पष्टं दक्षिणोत्तरगमनं सैव स्पष्टक्रान्तिरुच्यते चन्द्रादीनां परमशरांशाः ।

परमशरांशाः ।

| च | म | बु | बृ | शु | श |
|---|---|---|---|---|---|
| ४ | ५ | ४ | १ | ८ | २ |
| ३० | ३८ | ०० | ३० | ०० | ३० |

एभिर्युताश्चतुर्विंशत्यंशा जाताश्चन्द्रादीनां परमाः क्रान्त्यंशा लिख्यन्ते ।

परमक्रान्त्यंशाः ।

| चं | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|
| २८ | २८ | २८ | २५ | ३२ | २६ |
| ३० | ३८ | ०० | ३० | ०० | ३० |

इमां परक्रान्तिं गृहीत्वा यदि द्विगुणया रूपं बलं तदेष्टस्पष्टक्रान्तिसंस्कृतपरक्रान्त्या किमित्यनुपातेनायनवीर्यसाधनं युक्तं जिनांशतुल्यायां परक्रान्तौ तु ग्रहस्य विमण्डलस्थत्वेन परमगमनाभावाज्जिनांशमितपरक्रान्तिवशतोऽयनबलानयनं नितरामयुक्तमेवेति पूर्वः पक्षः ॥ अत्र ब्रूमः ॥ किं भवता जिनांशमितक्रान्तिपठितशरयोगेन या स्पष्टक्रान्तिः सा परक्रान्तिशब्देनोच्यते ऽथ वा प्रतिगोलमत्यधिका या स्पष्टक्रान्तिः सा परक्रान्तिशब्देनोच्यते । नाद्यः पक्षः । चन्द्रस्य बलसंपूर्णत्वाभावयोः सततं व्यभिचारात्कदाचिदव्यभिचाराच्च । भौमादीनां वर्षशतैरनेकैः संपूर्णबलालाभाच्च । तथा हि । यदा ऽयनान्तेनवराशिसमश्चन्द्रः पातस्त्वयनांशसमस्तत्र चन्द्रशरः पठितशरतुल्यः परम ४ । ३० क्रान्तिर्जिनांशमिता २४ एतत्संस्कारे जाता परक्रान्तिरष्टाविंशत्यंशाः सार्द्धाः २८ । ३० । अतस्तदैव संपूर्णं बलम् । यदा तु दक्षिणगोले सप्तविंशतितुल्या परक्रान्तिश्चन्द्रस्य तदापि परमगमनात्संपूर्णबलेनावश्यं भवितव्यम् । भवन्मते सार्द्धगजाश्विमितक्रान्तिव्यतिरिक्तस्थाने संपूर्णं बलं नायातीति दक्षिणगमनपरमत्वेऽपि संपूर्णं बलं नास्तीति नितरामयुक्तः प्रथमपक्षः । न च

क्रियते । प्रकृते च बुधस्यायनद्वितयेऽपि बलस्योक्तत्वात्क्रान्त्यभावस्य निर्णेतुमशक्यत्वात्त्रैराशिकं कथं प्रवर्ततेतिचेत् । सत्यम् । बुधस्य दक्षिणगमनसमाप्तौ संपूर्णं बलं ततो ह्रासक्रमेण सायनमेषादावर्द्धबलस्य ह्रासः । ततो वृद्धिक्रमात्परमोत्तरगमने संपूर्णं बलं पुनर्ह्रासक्रमात्तुलादावर्द्धबलापचयः । यद्यत्र बलाभावशब्देन बलशून्यत्वं विवक्षितं तत्तु कथमपि न स्यात् । अयनद्वयेऽपि संपूर्णबलाङ्गीकारात् । किं तु सायनमेषादौ तुलादौ च क्रान्त्यभावेन रूपबलस्यार्द्धतुल्यपरमह्रासात्त्रैराशिकप्रवृत्तेरन्यथानुपपत्त्या तदेव बलाभावस्थानमिति मन्तव्यम् । अथानुपातः । बलपरमापचयलक्षणाभावस्थानस्य बलपरमत्वस्थानस्य चान्तरे चतुर्विंशतिभागाः सन्तीति चतुर्विंशतिभागे रूपार्द्धं बलं तदा यथास्थितपदक्रान्त्यंशैः किमिति । अयं च क्रान्तिभागाष्टचत्वारिंशदंशो निष्पन्नः । अयं रूपार्द्धे योज्यस्तत्र मिथो हराभ्यामित्यनेन समच्छेदविधाने कृते सदा क्रान्तिभागैर्युताः चिह्नाः अष्टचत्वारिंशद्धृता बुधस्यायनबलं स्यादिति युक्तम् । एतदायनबलानयनं षड्बलप्रकाशे लाघवेन मयोक्तम् । याम्योत्तरैः स्याद्द्विगुणापमांशैर्युतायुताः पूर्णगुणाः शनीन्द्वोः ॥ स्वस्वं परेषामनिशं बुधस्य युता भवेदायनवीर्यमेतत् ॥ १ ॥ गणेशदामोदरसूर्यमुख्यैः स्पष्टापमास्याधिकमागरान्ते ॥ वर्षेशितस्याद्गणकेशयावैरुक्तमेवेति सुधीभिरूह्यम् ॥ २ ॥ स्पष्टार्थाविमौ । अथ यावता यदि चतुर्विंशत्यंशैस्त्रिंशल्लभ्यन्ते तत्र तदिष्टक्रान्तिभागैः किमिति । अत्र गुणहरौ षड्भिरपवर्त्य जाता गुणस्थाने पञ्च ५ हरे चत्वारः ४ यो राशिः पञ्चभिर्हन्यते चतुर्भिर्ह्रियते स स्यात्सपादगुण इव भवतीति स्यात्सपादगुणापमांशैरित्युक्तम् । शेषोपपत्तिः प्रतिपादितैव । स्पष्टापमाद्यनसाधनस्याप्युक्तत्वमत्र वक्ष्यामः । दशाध्यायस्यापि तथैवोक्तम् । यद्वापक्रमसिद्धा २४ शरभक्तं रूपमर्द्धितम् । रूपाद्युक्तमायनं वीर्यं स्याच्चेष्टाद्विगुणं पुनः ॥ १ ॥ स्पष्टक्रान्तिपञ्चसाधरान्ता २४ भागाभ्योऽधिकमायनबलं स्यादिति

तदानीं परमगमनमेव नास्तीति वाच्यम् । नाडीमण्डलादुत्तरतो दक्षिणतो वा गच्छतो ग्रहस्य पुनर्नाडीमण्डलाभिमुखगमनप्रवृत्तिक्रान्तेः परक्रान्तिशब्दवाच्यत्वात् । किं च । भौमादीनां पातो यद्ययनांशसमः स्यात्तदा चन्द्रवत्संपूर्णं बलमपि कदा चित्स्यात् । अयनांशसाम्यं तु पातस्य मन्दतरगतित्वादिह युगे वर्षशतैरनेकैरपि न संजाघटीतीति भौमादीनां संपूर्णे बले कथमपि न स्यादिति दूषणान्तरम् । नान्त्यः । तस्या द्विगुणत्वेनायुक्तत्वात् । तथा हि । एकस्मिन्नयने यावती परक्रान्तिस्तावत्येव चेदन्यस्मिन्नपि स्यात्तदा तयोर्योगे कृते द्विगुणैव पूर्वक्रान्तिर्भवतीति द्विगुणया परक्रान्त्येत्याद्यनुपातः सार्थकः स्यात् । अन्यायने तु परक्रान्तिर्विलक्षणैव भवतीति द्विगुणपरक्रान्त्येत्यस्यानुपातस्यानर्थक्यादसत्पक्षो द्वितीयोऽपि । न चायनद्वयेऽपि ये परक्रान्ती तद्योगेन यदि रूपं बलं तदेष्टस्पष्टक्रान्तिसंस्कृतयाऽऽक्रान्त्या किमित्यनुपातो युक्त इति वाच्यम् । अयनद्विगुणजपरक्रान्तिज्ञानस्य दुर्गमत्वात् । अथ वक्तव्यं यच्च स्पष्टक्रान्तेः परमत्वं सोऽयनसन्धिरिति प्रसिद्धेरयनांशोनितपातादित्यादिप्रागधिकारोक्त्या चन्द्रादीनामयनसंधी संसाध्य ताभ्यां परक्रान्तिज्ञानं सुगममिति । पुनर्भवेदेवम् । यदि स्पष्टक्रान्तिवशादायनबीजानयनमार्षमूलकं स्यात् । आर्षमूलकत्वाभावादेव परमलाघवकैराचार्यैर्विनांशमितक्रान्तिरेव परमायनस्थानमङ्गीकृतं तद्युक्तमेव । तथा च वराहः । सायनांशग्रहभुजराशीनिष्वभ्रि ४५ मि: गुरे. २३ । भूर्ये १२ हत्वा क्रमाद्भागाः स्यादनुपाततः ॥ १ ॥ एवं राश्यादिके युञ्ज्यादर्काराऽयनस्य च । राशित्रयमयो युञ्ज्यान्मेषादिस्थेषु तेष्वथ ॥ २ ॥ तुलादिस्थेषु राश्यादौ त्रिराशिभ्यो वियर्जयेत् । चन्द्रार्कयोर्यदीतं स्यात्तदा युञ्ज्याद् बुधस्य तु ॥ ३ ॥ भागीकृत्य विभक्तं यदायमायनं बलम् । रवेर्द्विगुणमेवं स्यादिति । अस्यायमर्थः । सायनांशग्रहभुजराशिमितपदद्वैक्यं भौमयचरादतोऽर्धशिंकद्वंगतभ्यमागा-

ऽभियुक्तं कार्ये तत्त्रिंशद्गुणं राश्यादिकं स्यात् । एवं राश्यादिकेषु सायनेषु सूर्यभौमगुरुशुक्रेषु मेषादिस्थेषु सत्सु राशिस्थाने राशित्रयं योज्यम् । तुलादिस्थेषु तु प्राग्राश्यादिकं राशित्रयाद्विशोधयेत् । चन्द्रशन्योर्विपरीतम् । बुधस्य तु सर्वदा योज्यम् । ततस्तदंशानां त्र्यंशः षष्ट्यंशात्मकमायनं बलं स्यात् । सूर्यस्य द्विगुणं कार्यमिति । अत्रोपपत्तिः । क्रान्त्यभावे ग्रहस्य रूपार्द्धं बलं तत्स्थानबलाभावस्थानान्तरे चतुर्विंशतिक्रान्तिभागात्मके त्रिमितायनराशयः सन्तीति जिनांशैस्त्रयोऽयनराशयस्तदेष्टक्रान्त्या किमित्यनुपातेन येऽयनराशयस्ते क्रान्त्यभावस्थानादागताः । अपेक्षितास्तु बलाभावस्थानादिति सौम्यगोले सूर्यभौमगुरुशुक्राणामयनराशीनां त्वधिकत्वात्त्रिषु योज्या याम्ये त्वल्पत्वात्त्रिषु हेयाः । शनीन्द्वोस्तु याम्ये योज्याः सौम्ये शोध्या बुधस्योभयतोऽप्युपचयात्त्रिषु योज्यास्ततो यदि षडयनराशिभी रूपं तदेष्टैः किमित्यायनं बलं स्यादिति युक्तम् । अत्र भगवता पराशरेण शिष्यानुकम्पया प्रतिगृहमयनभागाद्यं प्रसाध्य प्रथमं द्वितीयाद्द्वितीयं तृतीयादपास्य चोणि खण्डान्युक्तानि । ततोऽनुपातेनायनभागसाधनं चोक्तमिति सर्वमनवद्यम् । न हि निरवयवद्वादशांशमिता क्रान्तिरेकराशौ भवतीति किंचित्स्थूलमिदं । कल्पान्तरत्वाददोषः । यदि षष्टिमितायनराश्यंशैः खाष्टेन्दुप्रमितैः षष्टिकलातुल्यं बलं तदेष्टैः किमित्यत्रापवर्तनेनायनराशिभागानां त्रिभागः षष्ट्यंशाद्यं बलमिति ज्ञानम् । अतो युक्तमुक्तं भागीकृत्य त्रिभिर्भक्तमिति । परक्रान्त्या त्रयोऽयनराशयस्तदेष्टैः किमिति प्राग्दर्शितेऽनुपाते त्रिभिरपवर्त्य कृत्वाऽतिसूक्ष्मं प्रकारान्तरं पद्धतिप्रकाशे मयोक्तम् । क्रान्तिभागगज ८ भागलब्धभादौ संस्कृतगुणाः षड्गुणाः ॥ आयनं बलमिदं भवेन्मुनिस्त्वेवमेव हि पराशरो जगौ ॥ १ ॥ पराशरोक्तप्रकारेण जिनांशमितायनमेव परक्रान्तौ संपूर्णं बलमागच्छतीति स्पष्टक्रान्तिवशादायनवीर्यसाधनं सूर्यादिकृतं नितरामयुक्तमिति विद्वान्तः । किं च ।

ध्यम् । अत्रोपपत्तिर्बृहज्जातके । उदगयने रविशीतमयूखौ वक्रसमा-
गमगाः परिशेषाः ॥ विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः
परिकल्प्याः ॥ वक्रसमागमगाः समागमः संबन्धस्तेन वक्रसंबन्धं
प्राप्ता वक्रगा इति यावत् । परिशेषा भौमादयश्चेष्टाबलयुताः स्युरेते
विपुलकरा विपुलबिम्बा इति यावत् । लघुजातके । वक्रेऽन्ये स्निग्धवि-
पुलाश्चेति । समागमपदं त्यक्त्वैवोक्तं तेन । वक्रगास्तथा समागम-
गाश्चन्द्रसहिता बलिन इत्युत्पलव्याख्या न साध्वी । अथ विपुलकरा
इति चेष्टितवीर्ययुता इतिवचनादस्य बलस्यावश्यं चेष्टैव मूलम् ।
सा च चेष्टा परमविपुलबिम्बताख्या परमवक्रगतिस्थाने षड्राशितुल्ये
चलकेन्द्रे । शून्यसमे शीघ्रकेन्द्रे परमसूक्ष्मबिम्बताख्यचेष्टाभावः ।
अतः शीघ्रकेन्द्राख्यैव चेष्टाकेन्द्राणि षड्राशितुल्ये शीघ्रकेन्द्रे रूपं
संपूर्णं बलं शून्यतुल्ये बलाभावः । अन्तरा तु यदि षड्राशितुल्येन
चेष्टाकेन्द्रेण रूपं बलं तदेष्टचलचेष्टाकेन्द्रेण किमित्यनुपातेन बला-
नयनं युक्तम् । अथाचार्यैः शीघ्रकेन्द्राख्यैव चेष्टाकेन्द्राणीति सुगमं
विहाय यत्फलद्वयार्द्धसंस्कृतमध्येन चलोच्चं चेष्टाकेन्द्रं स्यादित्यङ्गी-
कृतं तत्रोपलब्धिरेव वासना । अथ फलद्वयार्द्धसंस्कृतमध्येनोनं
चलोच्चं किल चेष्टाकेन्द्रम् । तत्र प्रकृते फलद्वयमघातं तत्साध्यते ।
मध्यस्फुटान्तरं फलद्वयम् । अतो मध्यः फलद्वयसंस्कृतः स्फुटो
भवति । तदर्द्धेन संस्कृतो मध्यश्चलोच्चाच्छोध्यश्चेष्टाकेन्द्रं स्यात् ।
अतो मध्यस्पष्टविश्लिष्टदलनिदलभागित्याद्युपपन्नम् । यद्वा । विपरीत-
फलद्वयार्द्धसंस्कृतचलोच्चादेव मध्यः शोध्यश्चेष्टाकेन्द्रं भवति । तथा
च श्रीपतिः ॥ मध्यस्पष्टयोर्विवरार्द्धेन युक्ताच्चलोच्चान्मध्ये स्पष्टादधि-
कश्चेदपि न्यूनके वर्जिताच्च । जातान्मध्यग्रहमिति च भवेत्तच्च चेष्टा-
ख्यकेन्द्रमिति । अत्र जातात्स्पष्टग्रहमित्यपपाठः । यदूनामसंगत-
त्वात् । अथाचार्यः क्रियोपसंहारं कृत्वा मध्यस्पष्टयुतिरिति पाठान्तर-
मुक्तं तत्र युक्तिर्मध्याधिके स्पष्टे तावदुच्यते । मध्योनः स्पष्टः फलद्वयं

मन्दार्द्धफलद्वयार्द्धं जातमेतन्मध्ये म $\frac{1}{2}$ स्प १ समच्छेदविधानेन योजितं जातं मध्यस्पष्टयोगार्द्धम् ॥ म· स्प· यो $\frac{1}{2}$ अतो मध्यस्पष्टयुतेर्दलमित्यनेन फलद्वयार्धसंस्कृतो मध्य इति साधितं भवति । एवं मध्योने स्पष्टे योज्यम् । अनेन हीनं चलोच्चं चेष्टाकेन्द्रं स्यादत्र किंचिदम् । अत: सर्वमुपपन्नम् ॥

इदानीं निसर्गबलमाह ॥

स्यादेकोत्तररूपमद्रिविहृतं नैसर्गिकं स्याद्बलं मन्दार-
असुरेज्यशुक्रशशभृत्तीक्ष्णद्युतीनां क्रमात् ॥ १० ॥

स्यादिति पूर्वेणान्वय: । एकोत्तरं रूपमद्रिविहृतं सप्तभक्तं सन्मन्दादीनां क्रमान्नैसर्गिकं बलं स्यात् । एक उत्तरोऽधिको यस्य तत्तया । तच्च तद्रूपं च एकोत्तररूपम् । एकादिसप्तान्ता अङ्का: सप्तभक्ता नैसर्गिकं बलं स्यादिति निष्कृष्टोऽर्थ: । अत्रोपपत्तिर्बृहज्जातके । चक्रवृद्धिचराद्या वृद्धितो वीर्यवन्त: । अत्र चादिमिगद्याचार्यैरुपलक्षिता: शन्यादयो ग्रहा वृद्धितो बलिन: स्यु: ॥ अत्र सर्वापेक्षया रवे: संपूर्णं बलं संपूर्णता रूपात्मिकेति रूपं बलम् । अतो रूपसप्तमांश: शनेर्बलमेवं सप्तांशोपचयाद्भौमस्य सप्तांशद्वयमेवं बुधादीनां निसर्गबलमुपपन्नम् । एतद्बलं कदापि न चीयते नाप्युपचीयते सर्वदा सममेवेति नैसर्गिकं बलमित्यस्य नाम धृतं पराशराद्यै: । नैसर्गिकं स्वाभाविकमिति यावत् । अत्र पुस्तकेषु स्यादेकोत्तररूपमित्यस्यार्द्धस्य युद्धे बाणवियोगहृदित्यर्द्धात्प्राक् लिखनं लेखकभ्रमजं द्रष्टव्यम् । अन्यथा सभेदस्य चेष्टाबलस्यानभिधानान्मध्य एव निसर्गबलाभिधाने अर्थान्तरं स्यात् । यद्वा योद्धबलस्य कादाचित्कत्वाद्द्वयोरेव योगे चेष्टाबलं बहुधा भवतीति तस्य चोक्तत्वान्निसर्गबलमुक्तमिति न किंचिद्विरुद्धम् ॥

अथ युद्धजबलाख्यं भौमादीनां तृतीयं चेष्टाबलमाह ॥

युद्धे बाणवियोगहृत्खचरयोर्वा यैक्ययोरन्तरं स्वं सौम्यस्थबले क्षयं च यमदिक्संस्थस्य कुर्याद्बले ॥

खचरयोस्ताराग्रहयोर्युद्धे सति वाऽयैक्ययोर्युद्धजबलातिरिक्तसर्वबलैक्ययोरन्तरं रूपादिबाणयोः कलात्मककदम्बाभिमुखशरयोर्वियोगेन हृद्भक्तं तद्युद्धबलं स्यात् तत्सौम्यस्यस्योत्तरदिक्स्थितग्रहस्य बले स्वं धनं कुर्यात् । यमदिक्संस्थस्य बले क्षयमृणं कुर्यात् । गणक इति शेषः । शरान्तरं तु समदिशोः शरयोरन्तरेण भिन्नदिशोर्योगेन भवति । यस्योत्तरः शरः स उत्तरदिक्स्थो ग्रहो दक्षिणशरो दक्षिणदिक्स्थः । दिक्साम्ये यस्याल्पशरः सोऽन्यदिक्स्थ इति ज्ञेयम् । ननु किं नाम युद्धं तच्च केषां भवतीति न जानीम इति चेत् । उच्यते । समागमाभावे सति स्पष्टग्रहयो राश्यंशकलासाम्यमेव युद्धम् । केवलं राश्यंशकलासाम्यमेव युद्धमित्युक्ते समागमेऽपि स्पष्टग्रहयो राश्यंशकलासाम्याद्युद्धलक्षणमतिव्याप्तमतस्तद्वारणाय सत्यन्तम् । भिन्नराशिस्थत्वेऽपि समागमाभावाद्युद्धलक्षणं मा प्रसाङ्क्षीदिति राश्यंशकलासाम्यमित्युक्तम् । नन्विदं लक्षणमयुक्तम् । परमास्तमये समागमाभावे सति स्पष्टग्रहयोश्चन्द्रादिपञ्चान्यतरसूर्ययो राश्यंशकलासाम्यस्य सत्त्वेनातिव्याप्तेः । सूर्येणास्तमयः सहेति सूर्यसिद्धान्तोक्तिविरोधाच्च । तस्मात्समागमपरमास्तमयाभावकालीनस्पष्टग्रहराश्यंशकलासाम्यमेव युद्धमिति वाच्यम् । तथा सति न क्वाप्यतिव्याप्तिः । न च घटसत्त्वेऽपि घटपटौ न स्त इति प्रतीतेर्व्यासज्यवृत्तिप्रतियोगिताकोऽभावोऽवश्यं स्वीकरणीयः । तथा च समागमे समागमाभावाभावेऽपि समागमपरमास्तमयाभावादेव परमास्तमये परमास्तमयाभावाभावेऽपि समागमपरमास्तमयाभावाद्राश्यंशकलासाम्याच्च युद्धलक्षणं तथाप्यतिव्याप्तमिति वाच्यम् । समागमस्य परमास्तमयस्य च प्रतियोगिनः सत्त्वेन तत्र तदभावानभ्युपगमात् । तथा सति पूर्वलक्षणमनर्थकमिति चेत् । मैवं वोचः । स्पष्टग्रहयोरित्यत्र

भौमादिपञ्चकान्यतमयोः स्पष्टग्रहयोरित्यर्थस्य विवेचितत्वात् । परमास्तसमये समागमस्य सिद्धासिद्धिभ्यां निषेद्धुमशक्यत्वाच्च । समकलयोस्ताराग्रहयोः सूर्यसान्निध्यवशेनास्तसमये युद्धशङ्काव्युदासार्थमस्ताभावकालीनमिति विशेषणं देयम् । केचिदायनदृक्कर्म ग्रहेषु देयमित्याहुस्तद्वारणाय वास्तवपदमपि देयम् । तथा च समागमास्ताभावकालीन भौमादिपञ्चकान्यतमयोर्वास्तवस्पष्टग्रहयोः राश्यंशकलासाम्यमेव युद्धमिति फलितम् । ननु भेदयोगान्ययोगे दृक्कर्मदेयमित्युक्तेर्दृक्कर्मदानमावश्यकं तथा सति न देयमिति यदुक्तं तदयुक्तमिति चेन्न । यदाकृतेपि दृक्कर्मणि युतिः साध्यते सापि भवतीति भाष्ये भास्कराचार्यैरुक्तत्वात् । परं या युतिरायाति सा कदम्बाभिमुखी लोके कदम्बप्रसिद्धतारयोरभावाद्द्रष्टुः प्रतीतिर्नोत्पद्यत इति तत्र दृक्कर्म देयमेव । प्रकृते तु बलानयने द्रष्टुः प्रतीतेरनपेक्षितत्वाद्दृक्कर्म व्यर्थम् । अत एवाहुर्मिश्राः । वास्तवस्पष्टखेटानामिति । चन्द्रादीनां सूर्येण संयोगोऽस्तमनसंज्ञः । भौमादीनां चन्द्रेण संयोगः समागमशब्दवाच्यः । भौमादीनां परस्परसंयोगः कदाचित्समागमः कदाचिद्युद्धम् । तदुक्तं सूर्यसिद्धान्ते । ताराग्रहाणामन्योन्यं स्यातां युद्धसमागमौ । समागमः शशाङ्केन सूर्येणास्तमयः सहेति ताराग्रहाणां ताराकाराणां ग्रहाणां भौमादीनां पञ्चानां युद्धं समागमश्च द्वावेतौ भवतः । तत्र युद्धभेदाश्चत्वारः । तथा च वराहः । आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनासव्यैः । युद्धं चतुःप्रकारं पराशराद्यैर्मुनिभिरुक्तम् । लक्षणानि सूर्यसिद्धान्ते । उल्लेखस्तारकास्पर्शे भेदे भेदः प्रकीर्त्यते । युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम् ॥ १ ॥ अंशादूनेऽपसव्याख्यं युद्धमेकोऽत्र चेदणुरिति । अंशादूनेन्तरे यदा द्वावपि स्वल्पबिम्बौ तदा कूटविग्रहाख्यो भेदः । अयमपि भेदः पराशरेणापसव्याख्यभेदान्तर्गत एव कृतः । अंशादूनेऽन्तरे उभावपि पृथुबिम्बौ तदा समागम एवापसव्याख्ययुद्धम् । अत एव तत्रोक्तम् ।

आसन्नावप्युभौ दीप्तौ भवतस्तौ समागमे इति । अंशाधिकेन्तरे यदा द्वावपि पृथुबिम्बौ तदा समागम एव न कूटविग्रहः । समागमेंऽशादधिके भवतश्चेद्बलान्वितौ इति । अत्र बलशब्देन स्थानादिबलं न ग्राह्यं किं तु बिम्बस्थौल्यरूपं रूपबलमेव ग्राह्य मिति ब्रह्मसिद्धान्ते उक्तम् । स्थानादिबलचिन्तात्र व्यर्था केनापि न स्मृता ॥ प्रश्नचर्ये चाप्यस्मिन् स्थौल्यसौक्ष्म्यबलं स्मृतमिति । सूर्यसिद्धान्तटीकायां चोत्पलभट्टेनाप्येवमेव व्याख्यानम् । अंशादधिकेन्तरे यदा द्वावपि स्वल्पौ तदा कूटविग्रह एव न समागमः । अंशाद्न्यूनेन्तरेपि यदा द्वावपि स्वल्पौ तदा कूटविग्रह एव । अत एवाविशेषेणोक्तम् । स्वल्पौ द्वावपि विध्वस्तौ भवेतां कूटविग्रह इति फलितोयमर्थः । तारकास्पर्शे निमित्ते उल्लेखाख्यं युद्धं तारकाभेदे निमित्ते भेदाख्यं युद्धम् । अंशुयोगे निमित्तेंऽशुविमर्दाख्यं युद्धम् । अंशादूनान्तरयोर्ग्रहयोरेकस्याणुत्वे निमित्तेऽपसव्याख्यं युद्धं द्वयोरणुबिम्बत्वे कूटविग्रहाख्यं युद्धं द्वयोः पृथुबिम्बत्वे निमित्ते समागम एव न युद्धम् । अन्यथा युद्धसमागमसंकर इति भौमादिपरस्परयोगस्य सप्त भेदा भवन्तीत्याहुर्वामनाचार्ति कप्रणेतारोऽस्मत्पितृचरणा नृसिंहदैवज्ञाः । इदमत्रावधेयम् । शरयोगवियोगात्मके ग्रहान्तरे मानैक्यखण्डतुल्ये तारकास्पर्शस्तन्न्यूने तारकाभेदो मानैक्यार्द्धादधिकेंऽशार्धान्न्यूनेंऽशुविमर्दः । आरादंशार्धमंशूनां व्याप्तिरिति ब्रह्मसिद्धान्तोक्तेः । ग्रहान्तरे अंशार्धादधिकेंऽशादूने सत्येकस्याणुत्वेऽपसव्याख्यं युद्धं द्वयोरणुत्वे कूटविग्रहाख्यम् । अंशादूनेऽधिके वान्तरे द्वयोरणुत्वे कूटविग्रहो द्वयोः पृथुबिम्बत्वे समागम एव । षोडशकर्णे त्रिज्याधिकेऽणुबिम्बत्वं त्रिज्याल्पे पृथुबिम्बत्वमिति । अत्र युद्धपदोपादानात्समागमादौ नायं संस्कार इति बोद्धुम् । एवं चन्द्रादीनामपि युद्धे द्वयोर्द्वयोर्ग्रहयोर्युद्धबलव्यतिरिक्तसर्वबलैक्ययोरन्तराद्ग्रहान्तरेण फलमानीय यथोक्तवत्संस्कारः कार्यः । अत्र ग्रहे आयनदृक्कर्मगरे

बलिसंस्कारस्तदनु यष्ट्या द्युचरविविवरस्ताडितस्त्रिज्ययाप्त इत्यनेन
स्पष्टता च न कार्या । प्रयोजनाभावात् । अथोपपत्तिरुच्यते । बृह-
ज्जातके । विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्या
इति । परिशेषा इत्यनुषङ्गः । रवीन्द्वोश्चेष्टाबलस्योक्तत्वात्परिशेषा
भौमादयो युद्धे उत्तरसंस्थाश्चेष्टाबलयुताः स्युः । यतो विपुलकराः ।
विपुलकरा इति चेष्टाबलहेतुभूतचेष्टोपन्यासः ग्रहयुतावुत्तरस्थस्य
जयवशाच्चेष्टाधिक्यं दक्षिणस्थस्य पराजयवशाच्चेष्टाह्रासस्तद्विहोत्तर-
स्थस्य जयवशाद्बले यावदाधिक्यं तावानेव पराजयवशाद्दक्षिणस्थस्य
बले ह्रास इति सिद्धम् । केन चिद्दक्षिणस्थस्यापि जय उक्तस्तन्म-
तमत्र न गृहीतं । बृहज्जातके उत्तरसंस्था इति विशेषोक्तेः । अथ
लोके समबलयोर्जयः पराजयो नास्ति । तयोरेकस्य पश्चगमना
धिक्ये स्थूलदृष्ट्या साम्येऽपि सूक्ष्मदृष्ट्या पश्चगमनो जयः पराजयश्चा-
स्तीति बलान्तरतुल्यो जयः पराजयश्च पर्यवसितः । अत्र त्वत्र
सामान्याकारेण सर्वमेवागतं परं तु बलान्तरमेव जयपराजयविचा-
रस्य प्राप्तत्वादितरेतराश्रयभीत्या तदतिरिक्तसर्वबलैक्ययोरन्तरं बहु-
युद्धेऽपि न्याय्यम् । अत एव गणेशेन पूर्वप्रदिष्टबलसंकलनं विदित्वेति यद-
नन्तरं प्रदिष्टं दृग्बलं न योजितं तदतीवतुच्छमित्यवगच्छ । अत्र
सर्वेषां कलापर्यन्तमेव साधनात्कलातोऽल्पे ग्रहान्तरेऽन्तराभावलक्षणं
साम्यमेवेति मिश्राः प्राहुः ॥ ततोऽत्र पद्धतौ यत्र कलाद्यग्रहास्तत्र
स्फुटग्रहयोः साम्ये शरसाम्ये चैककलातोऽल्पेऽन्तरे साम्यमेवेति
फलितम् । एवं सति बलान्तरतुल्यः परमो जयः पराजयश्च युद्धस्य
परमोत्कर्षे परमसान्निध्ये ग्रहयोरन्तराभावलक्षणे साम्ये समुचितः ।
परमिह शरयोरेककलातो न्यूनेऽन्तरे यथोक्तान्तराभावलक्षणसाम्याद्या-
म्योदक्स्थत्वव्यवहाराभावेन जयाभावात्संस्काराभाव एव । ततः
शरयोः कलामात्रान्तरे याम्योदक्स्थताप्रवृत्तेस्तत्र बलान्तरतुल्यो
जयोऽजयश्च । अथानुपातः । यदि कलामात्रेण ग्रहान्तरेण बला-

न्तरतुल्यं बलं प्राप्यते तदेकक्रलादिना ग्रहान्तरेण किमिति । अथ सानिध्यापकर्षे बलापकर्षादिच्छावृद्धौ फले ह्रासादिति व्यस्तत्रैराशिकेण बलान्तरस्य कलादिग्रहान्तरं हरः फलमुदकस्थस्य जयोक्तेस्तस्य बले युक्तं दक्षिणस्थस्य पराजयोक्तेस्तद्बले हीनं कर्तव्यमिति युक्तम् ॥

एवं सभेदं चेष्टाबलं व्यवस्थाप्येदानीं दृग्बलमाह ॥

सदृग्दृष्टङ्घ्रियुग्ग्रहदृष्टिचरणोनं खेटवीर्यं भवेद् ॥

प्रागानीतं वीर्यं सतां शुभग्रहाणां प्रागानीतदृष्टीनामङ्घ्रिणा चतुर्थांशेन रूपादिना युक्तं युक्तं कार्यम् । उग्राणां पापानां दृष्टिचरणेनोनं कार्यम् । एवं कृते सति खेटवीर्यं भवेत् । जातावेकवचनम् । तेन खेटवीर्याणि भवेयुरित्यर्थः । यद्वा शुभदृष्टियोगचतुर्थांशपापदृष्टियोगचतुर्थांशयोरन्तरं धनमृणं दृग्वीर्यं स्यात् । शुभदृष्टियोगचतुर्थांशात्पापदृग्योगतुर्यांशे शुद्धे शेषं धनगतं दृग्बलमितरथर्णमिति वेद्यम् । ततः षण्णां बलानां योगे कृते षड्बलैक्यं तदेवात्र सर्वत्र बलशब्देन व्यवह्रियते । अत्रोपपत्तिः । लघुजातके । बलवान्मित्रस्वगृहोच्चनवांशेष्वीक्षितः शुभैश्च पि ॥ शुभैर्दृष्टो ग्रहो बलवानर्थात्पापदृष्टो निर्बल इति । अत्रेन्दोः सर्वदैव शुभत्वाद्बुधस्य च शुभत्वे चत्वारः शुभाः स्युः । पापत्वे चत्वारः पापाः । यदि चत्वारः शुभाः पापा वा संपूर्णदृष्ट्या पश्येयुस्तदा रूपतुल्यं दृग्बलं धनमृणं च क्रमेणोचितम् । अतोऽनुपातः । यदि चतूरूपमितया सर्वदृष्ट्या रूपं तदानेन दृष्टियोगेन किमिति शुभदृग्योगस्य पापदृग्योगस्य च चतुर्थांशः क्रमेण धनर्णं दृष्टिबलमिति निष्पन्नम् ॥

इदानीं भावानां विविधबलमाह ॥

भावानां बलमीशजं च न्टचतुष्पादाम्बुकीटाम्बुजाः ॥ ११ ॥

जायाम्बवायखभोनिताः खलु ततो दिग्वीर्यवत्स्युर्तं

सदृग्दृष्टङ्घ्रियुग्ग्रहदृष्टिचरणोनं प्रोज्झदृग्युक्पुनः ॥

अस्यायं तात्पर्यार्थः । भावानां स्वामिबलमेव बलमेकम् । च तुष्पान्नृचतुष्पाद्राश्यकीटाम्बुजाः । नरचतुष्पादकीटजलचरराशयो भावाः क्रमशः चतुर्थतनुदशमभावेषु निताः यदि षड्राश्यधिकास्तदा चक्र १२ शुद्धाः षड्राल्पा यथास्थिता अत्र षड्भक्ताः फलं दिग्बलं द्वितीयम् । अनेन दिग्बलेन स्वामिबलं युतं कार्यं स बलद्वयस्योगो भवेत् शुभग्रहदृष्टियोगचतुर्थांशपापदृगैक्यचतुर्थांशयोरन्तरं प्राग्बद्धनमृणं दृग्बलम् । तद्बुधस्य गुरोश्च समग्रया दृशा युतं कार्यम् । यदि ग्रहवत्साधितं दृग्बलं धनगतं तदा तत्र बुधगुरुदृष्टियोगो योज्यः चेदृणं तदा बुधगुरुदृग्योगेन सहान्तरं कार्यं शेषसमं दृग्बलं स्यात् । इदं तृतीयम् । त्रयाणां योगे भावस्य बलं स्पष्टं भवति । अत्र मत्पद्यानि पद्धतिप्रकाशे । अथ त्रिधाभावबलं वदामि स्वस्वामिवीर्यं बलमुक्तमेकम् । नभोगवद्दृष्टिबलं द्वितीयं समग्रचान्द्रीज्यदृगैक्ययुक्तम् ॥ १ ॥ धनाभिधा सौम्यदृगुग्रदृष्टिर्ऋणाभिधैक्ये धनयोस्तु योगः ॥ धनर्णयोरन्तरमेव योगस्त्वेव विदित्वा युतिरत्र कार्या ॥ २ ॥ नृकीटपश्वम्बुचराणि भानि जायाद्यवेश्माम्बरभोनितानि ॥ यथा षडल्पानि लवीकृतानि त्रिभिर्विभक्तानि बलानि तानि ॥ ३ ॥

अत्रोपपत्तिः ॥ सारावल्याम् । लग्नाधिपेन तुल्यं बलमिह चूडामणिर्वेदति । लग्नमित्युपलक्षणं तेन भावेशबलमेव भावबलमित्यर्थः । अतो युक्तमुक्तं भावानां बलमीशजमिति । नरचतुष्पदादिराशयः के ते च कस्यां दिशि बलिन इति भगवता गर्गेणोक्तम् । नृयुक्तुलाघटः कन्या पूर्वमर्द्धं च धन्विनः ॥ लग्नस्था बलिनो नित्यमेते हि नरराशयः । १ । चतुर्थे कर्कटो मीनो मकरार्द्धं च पश्चिमम् ॥ विज्ञेया बलिनो नित्यमेते हि जलराशयः । २ । सप्तमे वृश्चिकः कीटो बलवान्परिकीर्तितः ॥ धन्वर्द्धाद्धाजगोसिंहा बलिनः खे चतुष्पदाः ॥ ३ ॥ इति । अत्रार्द्धशब्देनार्धशेषो मकरपूर्वार्द्धो बोध्यः । नरचतुष्पदादिराशीनां प्रोक्तदिशि संपूर्णं बलं ततः सप्तमे बलाभावस्तदन्तरेऽनुपातेन बलानयनस्य स्वचरकिर्मावगमना । अत्र

नाम्ना कुम्भोत्तरार्द्धं मानुषं पूर्वार्द्धं चतुष्पदमित्युक्तम् । अन्येन तु संपूर्णः कुम्भो जलचर इत्युक्तम् । तदुभयमपि गर्गपराशरादिविरोधात्प्रत्याख्येयम् । किं च । पराशरेण कर्कवृश्चिकौ कीटावित्युक्तं तदपि नादरणीयम् । बहूनामसंमतत्वात् । कर्को जलचरो वृश्चिकः कीट इति सर्वसंमतम् । अथ शुभदृष्टो राशिर्बलवान्पापदृष्टो न बलवानिति शुभदृष्टेः पापदृष्टेश्चतुर्थांशो योज्यो वियोज्यश्च क्रमेणेदं प्रागुपपादितमेव । बुधजीवनिरीक्षितो राशिर्बलवानिति लघुजातकादौ बुधजीवदृष्टेर्विशेषेण पुनरुपात्तत्वात्समग्रबुधदृष्टौ संपूर्णजीवदृष्टौ च संपूर्णं रूपं बलमिति दृष्टिरूपे बले जाते गणितागतया सकलया बुधदृष्ट्या जीवदृष्ट्या च युतं कार्यमिति सर्वं परिच्छिन्नम् ॥ यत्तु नरराशीनां गुरुशुक्रयोस्त्रिकोणत्वं बुधस्य च गृहत्वमिति प्रत्यक्षसिद्धमेवातस्तेषां रूपं बलं वृश्चिकराशौ बलाभावः । यतो नीचत्वाच्चन्द्रस्य बलशून्यत्वमित्यादि युक्तिर्मन्दानन्दकरी सूर्येण गर्गादिमुनिग्रन्थापटुना श्रीपतिपद्धतिवृत्तौ प्रतिपादिता सा नितरामयुक्तेति बोध्यम् । वृश्चिके चन्द्रस्य बलाभावाल्लग्नस्यापि बलाभावेन भाव्यमिति यो ब्रूयात्स कस्योपहास्यो न स्यात् । यद्यत्रागम एव प्रमाणं तदा किमनेन वृथायुक्तिलिखनेन । अथ शास्त्रे सर्वत्रागम एव प्रमाणं तथापि मद्युक्तिरचेत्स्फुरिता सा लेख्या । तस्मादार्षग्रन्थानभिज्ञानां यत्किंचिद्युक्तं प्रतिपादयतां तत्त्वकरणव्यसनमायुष्मतां वृथैव ॥ ॥

अथोत्तरार्द्धेन रवीन्द्वोश्चेष्टाबलसाधनमाह ॥

त्र्यर्केन्दुस्त्रिभयुक्सायनरविर्वेष्टाख्यकेन्द्रे तयोर्गोकष्टेष्टविधौ

बले कुरु ततः प्राग्वच्च वीर्याय ते ॥ १२ ॥

सूर्योनश्चन्द्रश्चन्द्रस्य चेष्टाकेन्द्रं स्यात् । राशित्रयेणायनांशैश्च युतो रविः सूर्यस्य चेष्टाकेन्द्रम् । ताभ्यामाभ्यां केन्द्राभ्यां प्राग्द्रेष्काणादिचेष्टाबलवद् भगणात् च्युतं षड्धिकं षड्हृदित्यादिना तयोः

सूर्याचन्द्रमसोर्बले कुरु शिष्यनिमन्त्रणे लोट् । कस्मिन्विषये इत्याशङ्कायामाह । गोकष्टेष्टविधाविति । गावो रश्मयः । कष्टम् इष्टं च प्रसिद्धम् । अनयोश्चेष्टाबलयो रश्मीष्टकष्टसाधने उपयोगोऽस्तीत्यर्थः । न वीर्याय । बलैक्ये कर्तव्ये नोपयोग इत्यर्थः । अतएव बलसमासावेतच्चेष्टाबलमभिहितम् । अत्रोपपत्तिः । प्रागुदाहृते सारावल्याख्ये रवेरुत्तरायणे चेष्टायाः प्रतिशब्दितत्वादुत्तरगमनारम्भे सायननक्राद्यन्ते शून्यं चेष्टाकेन्द्रम् । परमोत्तरगमने सायनराशित्रयान्ते षड्राशिमितं चेष्टाकेन्द्रं तत्तु राशित्रययोगेन भवतीति तथोक्तम् । परमिदं स्थूलम् । वस्तुतस्तु गमनस्य क्रान्त्यधीनत्वात्क्रान्त्यनुपातेन प्रागुक्तेन रविचेष्टाकेन्द्रसाधनं न्याय्यम् । तत्क्रान्तिभागगतभागलब्धभादौ न संस्कृतगुणा इत्यनेन यद्भवेत् राशिप्रभृति फलमागच्छति तदेव रविचेष्टाकेन्द्रं ग्राह्यम् । स्थूलस्यास्य चेष्टाकेन्द्रस्य ग्रहणे तु चेष्टागुणवैलक्षण्याद्व्यायुषि मासाद्यन्तरायानात्स्थूलमिदं चेष्टाकेन्द्रमसदेवेति मुन्दरोक्तः पन्था नितान्तरमणीयः स्वीकरणीयः ॥ चन्द्र उत्तरेण बली स्यादेकोत्तरवृद्धपमित्यादावुत्तरशब्दस्याधिक्यार्थत्वादाधिक्येन चेष्टामूलकबलवान् । आधिक्यं त्वर्थाद्रव्यपेक्षया । ततो रवेः षड्भाधिके चन्द्रे परमविप्रकृष्टे पौर्णमास्यन्ते षड्भमितं चेष्टाकेन्द्रं तथामान्ते सूर्यसमे चन्द्रे आधिक्याभावाच्चेष्टाकेन्द्रं शून्यं तत्र व्यर्केन्दुनैव भवतीति तथोक्तम् । अतोऽनुपातेनान्तरे साधितं बलं शुक्लपक्षबलतुल्यमेवायातीति पूर्वं पक्षबलं द्विगुणमुक्तम् । यतेन द्विगुणे आयनपक्षवीर्ये चेष्टाबले तिग्मकराब्जयोः स्तः । इतीरितं श्रीपतिना नितान्तं न तन्मतं चारु विचार्यमाणमिति रत्नावलीकारमतमपास्तम् । अतो रवीन्द्वोश्चेष्टाबले प्रागेव योजितत्वान्न वीर्याय भवत इति सर्वं सुगमम् । बृहज्जातकेऽपि । उदगयने रविशीतमयूखौ चेष्टितवीर्ययुतौ परिकल्प्याविति च चन्द्रपक्षे उदक्पदपर्यायोत्तरपदस्याधिक्यत्वमवन्ध्येनाधिक्यार्थे लक्षणा स्वीकर्तव्या । सर्वे गत्यर्थाः प्राप्त्यर्थास्तदयने प्राप्ता

इति यावत् । तेनोच्चगमन इत्यस्याधिक्यप्राप्तावित्यर्थे सर्वमनवद्यम् ॥

सद्वासना या समकारि वृत्तिर्दिवाकरेणामलकेशवोक्तेः ।
पितृव्यसंप्राप्तधिया खगानां वीर्याधिकारः समगात्समाप्तिम् ॥

इति श्रीसांवत्सरवरतरकेशवदैवज्ञकृतजातककर्मपद्धतिटीकायां सद्वासनायां दिवाकरविरचितायां प्रौढमनोरमाभिधायां बलाध्यायस्तृतीयः ॥

अथेष्टकष्टसाधनाध्यायो व्याख्रियते । तत्र प्रथमं रवीन्दुचेष्टाबलयोर्गोकष्टेष्टविधावुपयोगोस्तीत्युक्तं तत्र को नाम रश्मिः के चेष्टकष्टे इत्युपस्थितौ तदानयनं वृत्तेनैकेनाह ॥

ये चेष्टोच्चबले रसैर्विनिहते सैके निजारश्मयस्तेष्टा-
तुङ्गयन्त्र्यघ्नतेः पदमिष्टेष्टे स्याद्दलोनैकयोः । घातान्मूल-
मिदं हि कष्टमयतद्रूपं दशायाः फलं वीर्यं ह्यक्ष्टय-
गिष्टकष्टगुणिते द्वे चेष्टकष्टाह्वये ॥ १२ ॥

ये चेष्टाबलोच्चबले सूर्यादीनां प्रागानीते ते रसैः षड्भिर्विनिहते गुणिते ततः सैके ऊर्ध्वस्थाने रूपयुते सती निजाः स्वकीया रश्मयो मरीचयः स्युः । चेष्टाबलाच्चेष्टारश्मय उच्चबलादुच्चरश्मयः स्युरित्यर्थः । अत्रोपपत्तिः । स्वोच्चस्थे ग्रहे सप्त मरीचयः परमनीचस्थे तु परमाल्पा रूपमिता मरीचिरत्रागम एव प्रमाणम् । तत्रोच्चे नीचभागान्तरं परमं षड्राशिसमं नीचे नीचग्रहान्तराभावः । अतो नीचग्रहान्तरादेव रश्मिसाधनं कर्तुं युज्यते । तत्रानुपातः । यदि षड्राशितुल्येन नीचग्रहान्तरेण षण्मरीचयस्तदेष्टग्रहस्य नीचग्रहान्तरेण किमिति । अत्र नीचग्रहान्तरं षड्भिर्गुणनीयं षड्भिरेव भाज्यमिति नाशः । तत्र षड्भक्तं नीचग्रहान्तरमुच्चबलं प्राक्प्रतिपादितमेव । अथ तदेव षड्भिर्गुणनीयं ततो रूपयुतमुच्चरश्मयो भवन्तीति निष्पन्नम् । एवं शून्ये चेष्टाकेन्द्रे ग्रहस्यैको रश्मिः । षड्भमिते सप्त रश्मयः ।

[illegible]मात्राद्विष्टकष्टार्थं चेष्टगुणार्थं च कल्पिता न तु वास्तवाः । शेषं सुगमम् । यद्वा । चेष्टोच्चकेन्द्रराशयः सैका द्विगुणांशादियुतास्चेष्टा-रश्मयो भवन्ति । तथा च पराशरः । नीचोनं तु ग्रहं भार्धाधिकं चक्राद्विशोधयेत् । उच्चरश्मिर्भवेद्राशिः सैको द्विघ्नांशसंयुतः । चेष्टा-केन्द्रं कुजादीनां पूर्वाध्याये समीरितम् । उच्चरश्मिवदानीय चेष्टार-श्मिमिति पूर्वप्रदर्शितेऽनुपाते षट्तुल्ययोर्गुणहरयोः सत्त्वात्सर्वमि-दमुपपद्यते । चेष्टोच्चरश्म्योर्योगार्धं स्पष्टरश्मयो भवन्ति । तेषां योगे या संख्या भवति ततः पञ्चेन्दुतो विंशतिरेव यावद्रश्मयस्तैः मनुजः सुशीलमित्यादिजातकफलं निगाद्यम् । तदाह पराशरः । द्वयोर्युतेः । दलं तु शुभरश्मिः स्यादिति । अथेष्टकष्टसाधनमाह । चेष्टातुङ्गबला-हतेरिति ॥ अत्र पदार्थः सुगम एव । तात्पर्यार्थस्तूच्यते । चेष्टाबले-नोच्चबलमुच्चबलेन चेष्टाबलं वोच्चाप्यचलनप्रसिद्धया खण्डगुणनात्मि-कया गोमूत्रिकागुणनरीत्या गुणनीयम् । तस्य मूलमिष्टसंज्ञम् । चेष्टाबलोनरूपतुङ्गबलोनरूपयोर्घातस्य मूलं कष्टं स्यात् । अत्रेदं तत्त्वम् । बलघातस्य बलोनरूपघातस्य वा यस्य मूलं ग्रहीतुमिष्टं स विंशोपि षष्टिवर्गे ३६०० न गुणनीयः । ततोऽधःस्थिताङ्कान्पङ्क्त्या भागे लब्ध-मुपर्युपरि संयोज्य यदूर्ध्वस्थाने निष्पद्यते तस्मात्स्यत्कान्त्याद्विषमा-त्कृतिमित्यादिपाटीगणितोक्तया मूलमानेयम् । पुनर्यच्छेषं ततो मूला-वशेषकं सैकं षष्टिघ्नं त्रिकलान्वितम् । द्विमंगुणाद्विमुक्तेन मूलेनाप्तं स्फुटं भवेदित्याद्यपरिभाषया मूलं ग्राह्यम् । एवं लब्धं द्विष्ठं पदं षष्टिभक्तं सविंशं मूलमतिस्फुटं स्यात् । तथा च करणकण्ठीरवे केशवार्कः । यत्षष्टिवर्गनिहतात्पदमङ्कषड्भिर्भक्तं स्फुटं तदिह मूलममूलदस्येति । अत्र बलघातो बलोनरूपघातश्च द्विधा.र षष्ट्या सवर्णनीयः षष्टिवर्ग-निहतघातसमो भवतीति सुगमोपायो वेद्यः । ऊर्ध्वाङ्कः षष्टिगुणोऽधः-स्थाङ्केन युतः पुनरप्येवमेव कार्यम् । यावदेष सवर्णनं विष्टाङ्कस्यैक-स्थानस्थितत्वमिति यावत् ॥ अथोपपत्तिः । उच्चस्थे ग्रहे शुभफलं

[illegible]मेव भगवत्पराशरस्याप्यभिप्रेतः । तथा च पराशरः । उच्चचेष्टाबले [illegible]को दिग्भिर्हृत्वा तु योजयेत् । दलयेदिष्टमन्यत्स्यात्षड्भ्यो वर्जितं फलम् ॥ १ ॥ अथोच्चचेष्टारश्मी रूपोनौ यावद्दशगुणौ क्रियेते तावत्षष्ठ्यंशाद्ये तुङ्गचेष्टाबले एव भवतः । अतस्तद्योगार्द्धमिष्टं तद्रू-[illegible]ष्टमितं कष्टमिति । अथोपपत्तिः । षड्राश्यल्पं नीचग्रहान्तरमुच्चकेन्द्रं भवति । चेष्टाकेन्द्रं तु मध्यस्पष्टयोगार्द्धचलोच्चयोः षडल्पान्तरतुल्यं प्रसिद्धमेव । तदुच्चकेन्द्रं चेष्टाकेन्द्रं च राशिस्थाने सैकं द्विघ्नांशादियुतं सदुच्चचेष्टारश्मी भवत इति तेनैवोक्तम् । अस्योपपत्तिः प्रागुक्तैव । अथ रश्मितो वैपरीत्येन केन्द्रौ साध्येते । रश्मी रूपोनावथोद्दलीकृतौ केन्द्रे स्यातां ते सावयवे दशगुणे अथो द्विगुणे च षष्ठ्यंशाद्ये तुङ्गचेष्टाबले भवतः । तस्माद्रूपोनरश्मी दशगुणौ बले भवत इत्युपपन्नम् । शेषोपपत्तिः प्रागुपपादितैव । तस्माच्चेष्टोच्चबलयोर्घातमिष्टं बलोनरूपयोर्घातः कष्टम् । अथ वा बलयोगार्द्धमिष्टं तद्रूनरूपं कष्टमिति निष्पन्नम् । मूलरूपेष्टकष्टं तु पराशरादिमुनिमतविरुद्धत्वादयुक्तत्वाच्चायुक्तमेवेति बोध्यम् । तस्य दूषणान्तरमप्यये वक्ष्यते । साधितयोरिष्टकष्टयोः प्रयोजनमाह । अथ तद्रूपं दशायाः फलमिति । अथशब्द आनन्तर्ये । दशायाः फलं शुभमशुभं च तद्रूपं स्यात् तद्रूप तत्स्वरूपमिष्टकष्टतुल्यमिति यावत् । एतदुक्तं भवति । गणितागतमिष्टं सपूर्णमङ्के पादो वा यावद्भवति तत्तुल्यं शुभफलं कष्टेन तुल्यमशुभं फलम् । इष्टकष्टयोः साम्ये शुभमशुभं च प्राप्तं फलं समं स्यान्मिश्रं फलमित्यर्थः । एतद् व्याख्यानं मूलरूपेष्टकष्टपक्षे तावदयुक्तम् । मूले मानाभावात् । किंच । मिश्रफलस्थले क्वापि संपूर्णशुभफलस्य सपूर्णाशुभफलस्य चावश्यकत्वे मूलरूपे तु मिश्रफलस्थलेऽर्द्धाधिकमिष्टं कष्टं च कदापि न स्यादिति दूषणान्तरम् । बलयोगार्द्धपक्षयोरप्येतद्दूषणम् । अपि च । तथात्वे विसदृशाभ्यां बलयोगार्द्धपक्षसाधितेष्टकष्टाभ्यां शुभाशुभफलनिर्णये कथमप्येकथा-

क्यता न स्यादिति । यद्वा । इष्टेऽधिके

कष्टाधिक्ये त्वशुभफलमधिकं तत्साम्ये मिश्रं फलमिति । इदमप्ययुक्तम् । स्वल्पाधिक्यबह्वाधिक्यस्थले सर्वत्राधिक्यस्य सामान्यरूपेण कथनस्यानौचित्यात् । अतोऽन्यथा व्याक्रियते । दशायाः शुभमशुभं च फलमिष्टकष्टस्वरूपं स्यात् । अयमभिसन्धिः । इष्टेऽधिके कष्टाद्यावदधिकमिष्टं शुभफलमशुभफलात्तावदधिकं स्यादशुभं फलं शुभफलात्तावदूनं स्यात् । कष्टेऽधिके इष्टात्कष्टं यावदधिकं तावदशुभं फलं शुभफलादधिकं स्यात् । इष्टकष्टयोः साम्ये शुभमशुभं च फलं समं स्यादिति सुन्दरमिश्रसंमतमेतद्युक्तियुक्तं च । सुन्दरमिश्रवाक्यम् । कष्टेष्टयोर्विवरतुल्यमसत्सतोः स्यादन्तरं हि फलयोः समता समत्वे इति । नन्विष्टकष्टान्तरतुल्यं शुभाशुभफलान्तरमित्युक्तं तत्र ब्रूमः । घातरूपयोर्योगार्द्धरूपयोरिष्टकष्टयोर्विरोधादुभयोरपि प्रमाणसिद्धत्वेन विनिगमकाभावादन्यतरपक्षाश्रयणस्य कर्तुमशक्यत्वादिति चेत् । सत्यम् । घातरूपयोर्योगार्द्धरूपयोरिष्टकष्टयोर्यद्यप्याकृतौ विरोधोऽस्ति तथाप्यन्तरे तयोरविरोध एव । अनन्तरोदीरितव्याख्यानेऽन्तरस्यैवोपयुक्तत्वात् । मन्दप्रतीत्यर्थमत्रोदाहरणम् । पूर्वमुदाहृते उच्चचेष्टाशुभफले $\frac{१}{५}$ । $\frac{१}{६}$ एतदूनं रूपं क्रमादशुभ फलं $\frac{४}{५}$ । $\frac{५}{६}$ शुभफलघात इष्टम् । $\frac{१}{३०}$ अशुभफलघातः कष्टम् । $\frac{२०}{३०}$ अनयोरन्तरम् । $\frac{१९}{३०}$ एवं शुभफलयोगार्द्धमिष्टम् । $\frac{११}{६०}$ अशुभफलयोगार्द्धं कष्टम् । $\frac{४९}{६०}$ अनयोरन्तरमिदम् । $\frac{३८}{६०}$ द्वाभ्यामपवर्तितं जातम् $\frac{१९}{३०}$ सममेव तत् सर्वमवदातम् । भावस्थानानोरुयोगोद्भवं यत्तत्स्मर्यं तस्य योऽस्य दशायामित्यभिहितत्वात्सर्वथापि ग्रहफलेन दशायामेव भवितव्यमिति दशायाः फलमिति युक्तमुक्तम् । वक्ष्यमाणेनेष्टकष्टेन केवलमपवर्गफलमेव चिन्तनीयं तदतिरिक्तं सर्वं फलमनेनेष्टकष्टेन विचारणीयम् । तथा चाहुः । अपवर्गफलादन्यत्सर्वमेतेन चिन्तयेत् ॥ अपवर्गफलं चाद्यं वक्ष्यमाणेन केवलमिति । अतो दशायाः

सामान्यशब्दस्य विशेषपरत्वाद्दशायाः फलं सप्तवर्गफलातिरिक्त-
मिति व्याख्येयम् । ननु सर्वं फलं दशायां योज्यमित्युक्तेर्दशायाः
तद्रूपमित्यनेनैव सप्तवर्गजफलनिर्णये प्राप्ते किमर्थं गुरुतरमायासे-
न पुनरिष्टकष्टानयनं कृतमिति । शृणु तर्हि । यदिदमुक्तमिष्टकष्ट-
साधनं तत्पराशरादिसंमतम् । वक्ष्यमाणं तु यवनसंमतमिति ।
प्रकारद्वयं स्वस्वमते भिन्नमेवास्ति । तथा सत्यंशायुर्दायादीनां चतुर्णां
स्वस्वमतभिन्नत्वेऽपि यथा पूर्वैरंशोद्भवं लग्नबलात्प्रसाध्यमित्यादिव्य-
वस्था कृता तथेदानींतनैः सप्तवर्गोत्पन्नत्वाद्वक्ष्यमाणेष्टकष्टस्यातस्तेन
भावफलनिर्णयस्तदितरफलनिर्णयश्चेष्टाख्यबलोत्पन्नेनेष्टकष्टेनेति व्य-
वस्था कृतेति न कश्चिद्दोषः । न च सप्तवर्गजेष्टकष्टं यवनोक्तत्वा-
दप्रमाणमिति वाच्यम् । ब्रह्मविष्णुरुद्रमुखनिर्गतशापेन यवनताम-
धिगतेन भगवत्सूर्येणैव यवनशास्त्रप्रणयनात् । तथाचोक्तमपावनं
यावनशास्त्रं कथं विप्रैः पठितव्यमित्याशङ्कायां पूर्वैः ॥ केशविष्णुमु-
खनिर्गतशापान्म्लेच्छताधिगततिग्ममरीचेः । रोमकेन पुरि लब्धमशेषं
सद्द्विजादिभिरतोऽध्ययनीयम् ॥ १ ॥ म्लेच्छताधिगततिग्ममरीचेरिति
पञ्चम्येकवचनम् । पुरि रोमकपत्तने । अशेषं समग्रं लब्धं शास्त्रमिति
शेषः । अन्यत्स्पष्टम् । अत्रायं विशेषः । ग्रहस्य यत्तद्भावसम्बन्धि-
दृष्टिफले तद्गोलमस्वपरगेषु शुभं यदुक्तमित्यादिवक्ष्यमाणविशेषवा-
क्येनैव विचिन्त्यम् । लग्नस्य सप्तवर्गज शुभाशुभफलं तु लग्नहोरादि-
स्वामिनश्चेष्टाख्यफलोत्पन्नेष्टकष्टेन चिन्त्यमिति ॥ अथेष्टकष्टबलदृष्ट्योरा-
नयनमाह ॥ योगे दृक्पृथगिष्टकष्टगुणिते द्वे चेष्टकष्टाह्वये इति ॥ ग्रहस्य
योगे षड्बलैक्यं पृथक् स्थानद्वये स्थाप्यम् । एकत्रेष्टगुणमिष्टबलमपरत्र
कष्टगुणं कष्टबलं स्यात् । दृगित्यत्र जात्येकवचनम् । तथा च ग्रहं
प्रति दृष्टयो याः पूर्वमानीतास्ताः स्वेष्टेन कष्टेन च गुण्याः क्रमेणेष्टदृष्टयः
कष्टदृष्टयश्च भवेयुः । के चित्तु ग्रहं प्रति या दृष्टयो येषां ग्रहाणा-
मानीतास्ताभ्यस्तद्ग्रहेष्टकष्टाभ्यां गुणनीया इत्याहुः । अस्य प्रयोजनं

मिति ॥ अहं तु ब्रवीमि ॥ स्वोच्चे मूलत्रिकोणे च स्वर्क्षेऽधिसुहृदि क्रमात् । मित्रर्क्षे च समर्क्षे च शत्रुभे चाधिशत्रुभे ॥ १ ॥ नीचे च षष्टिरिष्वब्धिः खाग्निः करकरास्तिथिः ॥ नागो वेदाः करौ शून्यं शुभमेतत्फलं विदुः ॥ २ ॥ षष्टिभ्यो वर्जितास्त्वेते शिष्टं स्यादशुभं फलम् ॥ तदर्द्धं तु फलं प्रोक्तमन्यवर्गे शुभाशुभम् ॥ ३ ॥ इति पराशरेण तच्छब्दस्य प्रयोगाद्युक्तियुक्तत्वाच्च गृहफलस्यैवार्द्धं समं स्थाप्यम् ॥ कार्यं तदैक्य इति ॥ सप्तस्थानस्थफलानां शुभानामैक्यमशुभानां चैक्यं कार्यमित्यर्थः ॥ पङ्क्त्योरिति । सप्तसु कोष्ठेषु पङ्क्त्योः कृताग्रे इष्टाग्रदैक्ये स्थाप्ये इति योजना । सप्त शोभनाः कोष्ठा ययोस्ते तथा पङ्क्त्योः शुभाशुभपङ्क्त्योः । सप्तमीद्विवचनमेतत् । इष्टं च अष्टञ्च इष्टाष्टौ तयोरैक्ययोगौ । इष्टैक्यं प्रागानीत चतुर्भक्तं शुभपङ्क्तौ स्थाप्यं कष्टैक्यमशुभपङ्क्तौ चतुर्भक्तं स्थाप्यमित्यर्थः । ननु सप्तकोष्ठानां सत्वाद्विनिगमकाभावेन कस्मिन्स्थाप्यमित्याशङ्कायामाह । प्रथमयोरिति । प्रथमयोरर्योःकोष्ठयोः । गृहकोष्ठकयोरिति यावत् । इदमपि सप्तमीद्विवचनम् । होरादिवर्गेषु तु गृहे स्थापितफलस्यैवार्द्धं समं स्थाप्यम् । वर्गपानामिति । गृहादिसप्तवर्गस्वामिनां पृथक् प्रत्येकं निजनिजे स्वीयेस्वीये सदसद्युती शुभैक्याशुभैक्ये उक्त्या पूर्वोक्तप्रकारेण कृत्वानन्तरं ताभ्यां निघ्ने इष्टाशुभे ये पङ्क्त्योः सप्तसु कोष्ठयोरित्यादिना स्थापिते ते कार्ये । उक्त्येत्यनेन स्वोच्चे रूपमित्यादिना स्थापितयोरेव शुभाशुभयोरैक्ये कार्ये न त्वनन्तरं स्थापितयोरिति ध्वनितम् । अचेटूदेद्विवचनंप्रगृह्यमिति प्रगृह्यत्वात् प्लुतप्रगृह्या अचिनित्यमित्यनेन प्रकृतिभावस्तास्मात्तन्निघ्ने इष्टाशुभे इति पाठेन भाव्यम् । एवं च छन्दोभङ्गो दुर्वारः । अतस्तत्संगुणेष्टाशुभे इति कृतसमासः पाठो रमणीयः ॥ ननु कार्ये तदैक्ये इत्यनेन प्राग्योगमभिधाय पुनर्यदाचार्येण योगः कार्य इत्युक्तं तदयुक्तमिव प्रतिभाति पुनरुक्तिदोषादिति चेत् । सत्यम् । यदि

कथंचित् स एव योगोऽन्यः स्थाप्यते तदा पुनर्योगसाधनं व्यर्थमेव । तथापि यदि प्राक्साधितयोगस्य चतुर्भागं गृहीत्वा नाशः क्रियते तदा पुनर्योगकरणं सार्थकमेवेत्यनुशयेनाचार्यैरुक्तमिति न कोपि दोषः । यद्वा । ग्रन्थे इतिकर्तव्यतायां च लाघवं प्रतिपादयताचार्येण यत्पुनर्योगसाधनमभिहितं तच्चेदमाकूतम् । प्राग्योगसाधनं व्यर्थमेव । किं तु स्वोच्चे रूपमित्यादिना गृहस्थापितस्यैव शुभाशुभस्य चतुर्थांशः स्थाप्य इति । यद्येवमभिमतं तर्हि योगचतुर्भागः स्थाप्य इति किमर्थमुक्तमिति नाशङ्कनीयम् । दामोदरादिग्रन्थाभ्यासवशादुक्तमिति वक्तुं शक्यत्वात् । अत्र श्रीपतिभिरपि । ये खेटभोच्चादिफले शुभाशुभे सकृत्पवर्गार्द्धविभाजिते इति गृहशुभाशुभस्यैव चतुर्थांशः स्थापितो न तु योगस्य । यद्यत्र योगोऽभिमतः स्यात्तदा तदीययुत्येत्यभिमन्यवदुक्तः स्यात् । अतः पङ्क्तयोः सप्तसु कोष्ठयोः प्रथमयोरिष्टासती ते कृताग्रे स्थाप्ये इति पाठः पाठ्यः । यद्वा । शब्दक्रमादर्थक्रमो बलीयानिति न्यायात् वर्गपानां पृथग्युतया पूर्वप्रकारेण ये निजनिजे सदसद्युती तन्निघ्ने इष्टाशुभे कृत्वानन्तरं वक्ष्यमाणं कर्म कार्यमिति व्याख्येयम् । कलितज्ञेशवमतैरेतदेवाभ्युपेयम् । अमुना प्रकारेण साधिते ये इष्टाशुभे ते वर्गेट्तत्स्थखगोत्थयोः सदसतोर्घातात्पदघ्ने सती स्फुटे भवतः । वर्गेट् वर्गस्वामी । तत्स्थः खगो वर्गस्थग्रहः तज्जयोः बलयोः सदसतोरिष्टगुणितयोः । शेषं स्पष्टम् । अत्रेष्टकष्टबलयोर्घातः श्रीपतिमुन्दरादिविरुद्धः किं तु केवलयोरेव बलयोर्घातः कार्यः । अतोप्येवं पठितव्यम् । वर्गेट्तत्स्थखगोत्थयोःसदसती घातात्पदघ्ने स्फुटे इति ॥ अत्रोपपत्तिः सारावल्याम् । राशिपतौ बलयुक्ते राशौ च बलान्विते तथा चन्द्रे । राशिफलं तत्सकलं नीचोच्चादिविधिना च संचिन्त्यम् ॥ अत्र दृग्गणस्वामिबलयोगेन राशौ बलवतीदं व्यर्थमिति प्रागुक्त्या राशिपतौ बलयुक्ते तथा चन्द्रे बलयुक्ते तद्राशिफलं सकलं संपूर्णं संचिन्त्यं नीचोच्चादिविधिना च संचिन्त्यं ।

नीचोच्चादिविधौ चकारेण राशिपतिचन्द्रयोः समुच्चयः । तथा सति चन्द्रस्य नीचोच्चत्रिकोणस्वगृहादिस्थानवशेन चन्द्राधिष्ठितराशेः स्वामिनश्च नीचोच्चत्रिकोणस्वगृहादिस्थानवशेन चन्द्रस्य राशिफलं चिन्त्यम् । अर्थादेवं होरादिफलेऽपि । होरादिपतौ बलयुक्ते तथा चन्द्रे बलयुक्ते चन्द्रस्य तदधिष्ठितहोरादिपतेश्च नीचोच्चत्रिकोणस्वगृहादिस्थानवशेन चन्द्रस्य होरादिफलं चिन्त्यम् । पश्चादस्य वाक्यस्य स्वोच्चस्थितः शुभफलमित्यादिशास्त्रद्वयेन सहैकवाक्यतया स्वोच्चत्रिकोणस्वगृहादिस्थानजशुभाशुभफलस्य सङ्कोचेन सप्तवर्गफले विषये सिद्धे चन्द्रः स्वोच्चस्थः स्वसप्तवर्गफलं शुभं संपूर्णमशुभं शून्यं करोति मूलत्रिकोणस्थः शुभं पादत्रयमशुभं पादं करोतीत्यादिना चन्द्रस्य स्वोच्चत्रिकोणस्वगेहादिस्थानजशुभाशुभफलं सप्तवर्गेऽपि समानं सिद्धम् । गृहहोरादिपतेश्च नीचोच्चादिविधौ तारतम्येन शुभाशुभफलस्याकाङ्क्षायामविशेषात्स्वोच्चस्थितः शुभफलमित्यादिसिद्धं तारतम्यमेव लभ्यम् । एवं सति चन्द्राधिष्ठितराशिहोरादिस्वामी स्वोच्चस्थश्चन्द्रस्य राशिहोरादिफलं शुभं संपूर्णमशुभं शून्यं करोतीत्यादिना तत्तद्वर्गे तत्तद्वर्गेशस्य स्वोच्चादिस्थानजशुभाशुभफलमन्यदपि सिद्धम् । तथा चाय निष्कृष्टोऽर्थः । चन्द्रस्य स्वोच्चत्रिकोणादिस्थानजशुभाशुभफलेन चन्द्राधिष्ठितराशिहोरादिपतेश्च स्वोच्चत्रिकोणादिस्थानजशुभाशुभफलेन समुच्चयेन चन्द्रस्य राशिहोरादिफलनिर्णयः । एवं चन्द्रपदस्थाने भौमादिपदोल्लेखं कृत्वा भौमादिसप्तवर्गव्यर्थसिद्धिः कार्या शशिपदतोऽन्येष्वनुवर्तिचिन्त्या इति वराहोक्तेः । अथ वर्गस्वर्गगयोः स्वोच्चादिस्थानजशुभफलं तदूनं रूपमशुभं फलमिति सिद्धे वर्गस्वामिनः स्वोच्चाद्यन्यतमस्थानजशुभाशुभफलयोः सप्तवर्गेऽपि समयोस्तत्तद्वर्गेशस्य स्वोच्चाद्यन्यतमस्थानजशुभाशुभफलयोस्तत्तद्वर्गे विलक्षणयोश्च समुच्चयेन वर्गस्य राशिहोरादिसप्तवर्गफलस्य निर्णये प्राप्ते सदृशेनायां रूपमितायां न्याय्यत्वे प्राप्तदुपपत्तिरनुपपन्नतया-

स्वल्पकष्टत्रैराशिकेन । यदि रूपोन्मिते संपूर्णे वर्गस्थले संपूर्णे वर्गेश-स्थले संपूर्णं रूपं फलं तदास्मिन्वर्गस्थफलेऽस्मिन्वर्गेशफले किमिति पूर्ववद्वर्गस्थवर्गेशयोः शुभफलघात इष्टमशुभफलघातः कष्टं जातम् । किं च । वर्गस्थवर्गेशयो रूपद्वयमितेन परमफलयोगेन संपूर्णं रूपं यदि फलं तदानेन वर्गस्थवर्गेशफलयोगेन किमिति त्रैराशिकेन वर्गस्थवर्गेशयोः शुभफलयोगार्द्धमिष्टमशुभफलयोगार्द्धं कष्टं सिद्धम् । प्रमाणसिद्धयोरनयोरैक्यं पुरा प्रदर्शितमेव । अतः सम्यगुक्तं सकलजातकशास्त्रतत्त्ववेदिभिः श्रीमत्सुन्दरमिश्रैः । वर्गस्थभपशुभाशुभे ये वर्गपगेहोत्थशुभाशुभाभ्याम् । युतेऽर्द्धिते सद्गुणिते च वा ते राश्यादिवर्गस्य शुभाशुभानीति ॥ अथ प्रकृते स्वोच्च रूपमित्यादितद्वैकमसदित्यन्तं सर्वं प्रतिपादितवासनमेव । प्रधानता राशिफलस्य नून होरादिवर्गाद् द्विगुणं गृहं यदिति यवनवाक्येन होराद्यपेक्षया राशेर्द्विगुण्यलाभेन राशौ यत्स्थापितं तस्यार्द्धं होरादिषु समं स्थाप्यमत उपपन्नं दलं षट्स्विति । अथ वर्गेशस्य शुभयोगेनाशुभयोगेन च गुणनीयमस्यतः कार्यं तदैक्ये इति सर्वं साधु ॥ अथ वर्गस्थस्य शुभाशुभफलं वर्गेशशुभाशुभफलेन गुणनीयं तच्च केवलयोर्गुण्यगुणकयोर्घाते यावत्फले तावदेव गुण्यगुणकयोरेकस्मिन्समेन केन चिदङ्केन गुणिते परस्मिन्भक्ते पश्चात्तयोर्घाते कृते सति स्यादिति प्रसिद्धम् । यथा गुण्यः ४ गुणकः १० अनयोर्घाते जातं गुणनफलम् ४० अथ वा गुण्यो द्विभक्तः २ गुणको द्विगुणितः २० अनयोरपि घाते जातं तदेव ४० । द्विभक्तगुणकेन ५ द्विगुणितगुण्ये ८ हते वा तदेव जातम् । ४० यथमत्राचार्येण वर्गस्थशुभाशुभफलं गुण्यं चतुर्भिर्भक्तं कृतमतः पञ्चत्वोः साङ्कोङ्कयोः प्रथमयोरिष्टासती ते कृताये स्याप्ये इति सूपूक्तम् । ऐक्ये इति संपाठायानम् । अथापि होराद्यपेक्षया राशेर्द्विगुण्येन राशिफलस्यैवार्द्धं होरादौ समं स्थाप्यमतो मङ्गलादिषट्सु च तदर्द्धं इति शोभनमभिहितम् । एवं वर्गेशस्य

गेहोक्तशुभाशुभफलरूपो गुणकश्चतुर्गुणितो जातं वर्गेशस्य सप्तवर्गजशुभैक्याशुभैक्यतुल्यम् । यतो गृहफलस्यार्द्धं होरादौ स्थापितमस्ति तद्योगे गृहफलं द्विगुणं भवति तच्च गृहफले योजिते चतुर्गुणं गृहफलमेव भवतीति गृहफले चतुर्गुणे सति सप्तवर्गजफलयोग एव भवतीति पर्यवसितम् । असावेव गुणकः । अनेन गुणकेन चतुर्भक्तवर्गस्थगृहफलरूपो गुण्यौ तौ वर्गपानां पृथक्कृत्वोक्त्या सदसद्युती निजनिजे तत्संगुणे शुभाशुभे इति सर्वमवदातम् । अन्ये तु गृहस्वामिनि स्वोच्चमूलत्रिकोणादिस्थे रूपपादोनरूपप्रभृतिकं शुभं फलं तदूनरूपतुल्यमशुभं च फलं स्थाप्यं होरादौ तु गृहवदागतशुभयोर्दलं स्थाप्यं न गृहस्थितफलस्य तथा सप्तवर्गजशुभयोगाशुभयोगयोः चतुर्थांशः पङ्क्त्योः स्थाप्यो न केवलं गृहस्थशुभाशुभफलयोरित्याहुः । तत्र गृहस्वामिनि स्वोच्चत्रिकोणादिस्थे रूपचरणोनरूपादि शुभं तदूनैकमशुभं फलमिति तावदयुक्तम् । यतस्तथासति वर्गस्थस्य वर्गेशस्य च स्वोच्चाद्यन्यतरस्थानजशुभाशुभफलाभ्यां समुच्चयेन वर्गस्थस्य शुभाशुभफलनिश्चय ईदृशोऽर्थः पर्यवस्यति । यवनकल्याणवर्मादिग्रन्थावलोकनेन तु वर्गस्थवर्गेश्वरयोः स्वोच्चादिस्थानवशेन वर्गस्थस्य शुभाशुभनिर्णयोऽयमर्थः प्रतीयते । अतस्तदसदित्यवधेयम् । होरादौ गृहवदागतयोः शुभाशुभयोर्दलं स्थाप्यं तथा सप्तवर्गजशुभाशुभैक्ये चतुर्भक्ते पङ्क्त्योः स्थाप्ये इत्यपि वासनाशून्यतया नितरामयुक्तमिति बोद्धव्यम् । अन्यथात्र रूपाधिकस्यापीष्टकष्टस्य संभवात्सर्वत्र संपूर्णतारूपात्मिकेति पद्धतिकृतां गर्गपराशरादीनां सिद्धान्तो व्याकुप्येत । भावदृग्बलादौ सर्वत्र परमताया रूपमितायाः कल्पितत्वादत्रैकस्मिन्नेव रूपाधिकपरमतास्वीकारेऽननुगमोऽपि तद्दूषणम् । तदननुगमभियैव प्रागिष्टकष्टे वेलाख्यद्वयात्मकपञ्चराशिकेनोपपत्तिमुपकल्प्य चेष्टोच्चशुभफलवत् कष्टमित्युक्तं मयोदायः । तस्मादिष्टकष्टविषये सुन्दरोक्तिरेव सुन्दरीति दिक् । अथ वर्गेट्स्थानस्थगोश्मोरित्यत्र युक्तिः ।

राशिपतौ बलयुक्ते इति पूर्वप्रदर्शिते सारावलीवाक्ये वर्गेशे बलयुक्ते वर्गस्थे च बलोपेते तत्फलं सकलमित्युक्तम् । तथा वर्गेशयोः स्वोच्चादिस्थानवशेन फलनिर्णय इति चोक्तम् । एवं सति संपूर्णतायाः रूपमितायाः एव न्याय्यत्वेन सर्वेषां समुच्चयेन फलनिर्णये प्राप्ते त्र्यपत्तिस्त्रैराशिकत्रयात्मकेन पञ्चराशिकेन यदि संपूर्णे वर्गस्थबले संपूर्णे वर्गेशबले संपूर्णे वर्गस्थवर्गेशशुभाशुभफलघातरूपे कथितेष्टकष्टे च संपूर्णं रूपं फलं तदास्मिन्वर्गस्थबलेऽस्मिन्वर्गेशबलेऽस्मिन् वर्गेशवर्गस्थफलघातरूपे कथितेष्टकष्टे च किमिति । पञ्चसप्तनवराशिकादिष्व इत्यनेन वर्गस्थवर्गेशबलकथितेष्टकष्टघातो रूपेण भाज्य इति निष्पद्यते । तत्राचार्येण बलघात एव पूर्वं कृतः पश्चात्तेन प्रोक्तेष्टकष्टं गुणनीयमित्युक्तम् । बलघातस्य मूलं तु प्रागिष्टकष्टे चेष्टोच्चफलघातस्यैव सत्यभावाद्गृहीतम् । पूर्वं यथा चेष्टोच्चफलयोः समुच्चये घातमूलमुक्तं यथा च वर्गस्थवर्गेशफलयोः समुच्चये घात उक्तस्तथात्रापि घातमूलं घातश्च किमिति नोक्त इत्येतद्ग्रन्थपरिशीलनवतां शङ्का स्यात्तस्या निवारणार्थं तत्यभावाच्च वर्गस्थवर्गेशबलयोः समुच्चये घातमूलमुक्तं तेन चेष्टकष्टसमुच्चये गुणनमुक्तमिति मिश्राः प्रयोजनमाहुः । वस्तुतस्तु इष्टे चेत्सामान्यत आधिक्यं वर्गस्थवर्गेशबलघातमूलेन गुणनेऽपि तस्मिन्नेवाधिक्यं कष्टे चेदाधिक्यं तदा तस्मिन्नेव । यावदाधिक्यपक्षेपीष्टकष्टयोः संपूर्णरूपान्तरस्थले वर्गस्थवर्गेशबलघातमूल्यतुल्यमन्तरं भवति । ततो घातमूलेन संपूर्णोपादपष्ट्यंशकल्पनायां पूर्ववदेतयोर्नकोऽपि विशेषोऽतो बलघातमूलेन गुणना व्यर्था । एवं सत्यपि ये चेष्टकष्टगुणितबलघातमूलेन गुणनमाहुस्तदतीव व्यर्थम् । एवमस्य गुणनस्य व्यर्थत्वेऽपि प्राचत्प्रयोजनमूचुः । यत्तु प्रागुक्तमिष्टकष्टान्तरतुल्यं शुभाशुभफलान्तरमिति तदुदाहरणं प्रदर्श्यते-बृहज्जातके । शनिक्षेत्रस्थशुक्रफलम् । रविजर्क्षगतेऽमरारिपूज्ये सुभगः स्त्रीविजितो रतः कुनार्यामिति । वर्गस्थः शुक्रो वर्गेशः

शनिश्चात्र षड्वाधिकवीर्यस्तेनेदं शुभमशुभं च फलं संपूर्णं पश्चात्संपूर्णतायामेव सुभग इति शुभफलात् स्त्रीविजित: कुनार्यां रत इत्यशुभफलमेतावदधिकम् । $\frac{9}{92}$ इष्टकष्टान्तरे कृते कष्टस्यैतत्स्वल्पस्यैवायसीयमानत्वात् । एवं च बुधस्य तत्रैव स्वत्रिंशांशफलम् । मेधाकलाकपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुता: शशिजेतिमान्या: ॥ बुधस्य त्रिंशांशकोष्ठके इष्टं $\frac{9}{9}$ कष्टम् $\frac{9}{2}$ एतदन्तरम् $\frac{9}{2}$ अत्र वर्गस्थो वर्गेश्वरश्च बुध एव स च मध्यबलस्तदिदं शुभमपि मध्यम् । पश्चात्तत्रैव कपटयुतात्मकादशुभफलाच्छुभफलं मेधाकलाकाव्यविवादशिल्पशास्त्रार्थसाहसयुतादिकमेतावदधिकम् । $\frac{9}{2}$ एवं सर्वत्र फलानां विचारो विधेय इत्यलमतिचापल्येन ॥

सवासना या समकारिवृत्तिर्दिवाकरेणामलकेशवोक्ते: ।
तत्रेष्टकष्टानयनाधिकार: समग्रसार: समगात्समाप्तिम् ॥ १ ॥

इति श्रीकेशवसांवत्सरोक्तजातककर्मपद्धतेष्टीकायां दिवाकरविरचितायां प्रौढमनोरमाभिधायां सवासनायामिष्टकष्टाध्यायश्चतुर्थ: ॥

अथ भावस्थानालोकयोगोद्भवं यत्तत्सर्वं तस्य योज्यं दशायामिति बृहज्जातकोक्ते: सर्वत्रापि फलेन दशास्वेव भवितव्यम् । दशाज्ञानं त्वायुर्दायाधीनमेवं क्रमेण यदायुर्ज्ञानं जातकफले प्रयोजकमत आयुर्दायाध्याय आरभ्यते ॥ तत्रायुर्द्विविधं योगजं गणितागतं च । योगजमपि चतुर्द्धा । रिष्टजं परमं नियतममितं च । तत्र रिष्टजस्योदाहरणम् ॥ सिंहालिकुम्भस्थितसैंहिकेयो विलोकित: क्रूरखगैर्यदि स्यात् । वर्षाणि सप्तैव तदीयमायु: प्रकीर्तितं जातकशास्त्रविद्भि: ॥ परमायुषश्च ॥ अनिमिषपरमांशके विलग्ने शशितनये गवि पञ्चवर्गलिप्ते । भवति हि परमायुष: प्रमाणं यदि सहिता: सकला: स्वतुङ्गभेषु ॥ नियतस्य ॥ लग्नाष्टमारीन्दुयुता न चेत्स्यु: क्रूरा: स्वभस्था यदि खेचरौ द्वौ ॥ बलान्वितावम्बरगौ भवेतां जात: शतायु: कथितो मुनीन्द्रै: ॥ अमितस्यापि । गुरुशशिसहिते कुलीरलग्ने शशि-

तनये भृगुजे च केन्द्रयाते ॥ अवरिपुसहलोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विनाश्यादिति ॥ गणितागतमपि पञ्चविधम् । अंशजं पिण्डजं नैसर्गिकं जीवशर्मोदितं मिश्रं च । एतन्मिश्रमपि चतुर्द्धा ॥ एवं द्वादशप्रकारमायुरिति व्यावर्णयन्त्याचार्याः । तथा च होरामकरन्दे ॥ आयुर्मुनीन्द्रैर्द्विविधं प्रदिष्टं योगोद्भव चानियताख्यमेतत् ॥ आद्यं चतुर्भेदविभिन्नमाहुरन्यतथा पञ्चभिरत्रभेदैः ॥ १ ॥ रिष्टं परं नियतमत्र तथाऽमितं च भेदा भवेयुरिति योगसमुद्भवस्य ॥ पैण्डं तथांशजनितं च निसर्गमन्यत्सप्तांशमिश्रमिति चानियतस्य भेदाः ॥ २ ॥ चन्द्रार्कयोश्चन्द्रविलग्नयोश्च लग्नेनयोः सूर्यविधूदयानाम् ॥ साम्ये बलानामिति मिश्रभेदादायुर्भवेद्द्वादशधैवमत्रेति ॥ ३ ॥ तत्र योगजायुर्दायभेदस्यामितायुर्दायस्योदाहरणं तावद्वृत्तार्द्धेनाह ॥

**कर्कोन्द्विज्ययुतोदये बुधसितौ केन्द्रे त्र्यरीशेतरैरायुर्विद्ध्यमितं हि योगजमिदान्यत्रोच्यतेथोन्मितम् ॥**

कर्की कर्कराशिः इन्दुश्चन्द्रः । इज्यो बृहस्पतिः । एभिर्युतश्चासावुदयश्च स तथा । तस्मिन्कर्कोन्द्विज्ययुतोदये । कर्कलग्ने चन्द्रगुरुसहित इत्यर्थः । केन्द्रे लग्नचतुर्थसप्तमदशमस्थानरूपे यदि बुधसितौ मिलितौ पृथग्वा भवतः । त्र्यश्च अरयश्च ईशाश्च त्र्यरीशास्त्रयस्तृतीयं स्थानम् । अरयः षष्ठम् । ईशा एकादशम् । एषु स्थानेषु इतरैः सूर्यभौममन्दैः इहास्मिन्योगे अमितमायुर्विद्धि । जानीहीत्यन्वयः । क्रियाबलाद्गणकेत्यध्याहारः । अन्यत्र ग्रन्थान्तरे योगजमायुर्विद्धि । अत्र तु ग्रन्थे उन्मितं गणितागतमायुरुच्यते । मयेति शेषः । योगजमित्यत्र सामान्यशब्दो विशेषपर इत्यमितायुर्दायातिरिक्तं योगजमिति व्याख्येयम् । एतदर्थोपलम्भायैव हिशब्दो दत्त इति बोध्यम् । अन्यथा मितायुर्दायस्य योगजायुर्दायाद्बहिर्भूतत्वमापद्येत । तथा सति योगजमायुश्चतुर्द्धा । रिष्टपरनियतामित-

भेदादिति हारिकोक्तं दत्तजलाञ्जलि स्यात् । योगजमिवान्यत्रोच्यते इति पाठे अस्मिन्योगे अमितमायुर्विद्धि । किमिव अन्यत्र ग्रन्थान्तरे योगजमिव । योगजमित्यत्र प्राग्जद्विशेषपरता । तथा च ग्रन्थान्तरादमितायुर्दायव्यतिरिक्तं योगजमायुर्जानीहि । तद्वदेवात्र योगेमितमायुर्जानीहीति भावः । अत्रामितायुर्दायस्य योगजायुर्दायोपम्यं स्थानीय एव, यद्वात्र योगेमितमायुरिव ग्रन्थान्तरे योगजमायुर्विद्धीति इवशब्दस्य भिन्नक्रमयोजनार्थः साधीयान् ॥

अथ गणितागतायुरानयनं विवक्षुस्तावत्तद्भेदस्यांशायुर्दायस्योपयोगिभूतान् चेष्टागुणोच्चगुणस्पष्टगुणान्वृत्तोत्तरार्द्धेनाह ॥

व्यल्पात्स्वोत्किरणाः सरूपकिरणाङ्घ्रिस्त्वेच्चयोर्ध्वाविभू

गोर्द्ध चैष्टिकतुङ्गसंभवगुणौ तद्घातमूलं स्फुटः ॥ १६ ॥

स्पष्टोऽर्थः ॥ घातमूलप्रक्रिया पूर्वाधिकारोक्ता बोध्या ॥ अत्रोपपत्तिः ॥ लघुजातके । यदुक्ते चांशनीचेद्धे सूर्यलुप्तकिरणाश्च ॥ घपयन्ति स्वाद्धायान्नास्तं यातौ रविजगुरू ॥ चयायुषि परमोच्चे चितयगुणः परमनीचेऽर्द्धहानिः । दर्शितरीत्या चेष्टापरयोर्वक्रास्तपदयोर्द्वयोरपि सत्वादत्र परमचेष्टाह्रासे शून्ये चेष्टाकेन्द्रेऽर्द्धहानिः । षड्भमिते षयं गुणः । ततोऽर्द्धहानिमारभ्य हान्यभावपर्यन्तमेकं चैराशिकं ततो गुणोपचयेन त्रिमितगुणपर्यन्तं द्वितीयम् । अत्रैकेन गुणेन हान्यभावे च तदेवायुर्मित्प्रतीत्यैकगुणस्थानं हान्यभावस्थानं चैकमेव । तत्र शून्यचेष्टाकेन्द्रान्नीचात्त्र षड्भान्तरे त्रिमितगुणस्थानमतः कारणाद्यथैकगुणस्थानं राशिद्वयान्तरे ॥ हानिरपि परिणामे गुणात्मिकैवेति शून्यचेष्टाकेन्द्रे नीचे चार्द्धं गुणः । अथ शून्यचेष्टाकेन्द्रे नीचे चैको रश्मिस्ततोऽग्रतो रश्मिद्वयोपचयेनार्द्धगुणोपचयस्ततोऽनुपातः । यदि रश्मिद्वयेन रूपार्द्धं गुणस्तदा रिरूपकिरणतुल्यैः शून्य-

चेष्टाकेन्द्रनीचायिमरश्मिभिः किमिति विरूपकिरणाङ्घ्रिगुण इति जातम् । रू $\frac{१}{४}$ र १ । अयं रूपार्द्धमितगुणे समच्छेदविधिना योज्य-स्तत्र समच्छेदौ । रू $\frac{१}{४}$ र १ । रू $\frac{२}{४}$ । अत्र रश्मिषु द्वयं योज्यम् । एकः शोध्योतः सरूपकिरणाङ्घ्रिगुण इत्युपपन्नम् । इदं साधनं रूपत्रयाल्पराशिषु ज्ञेयम् । अथान्योऽनुपातः । यदि रश्मित्रयाधि-करश्मिभिश्चतुर्मिते द्विमितो गुणस्तदेष्टै रूपत्रयोनरश्मिभिः. किमि-ति । अत्र गुणहरौ द्वाभ्यामपवर्त्य जातम् । रू $\frac{३}{२}$ रू १ अयेकगुणः समच्छेदविधानेन योज्यस्तत्र समच्छेदौ रू $\frac{३}{२}$ रू १। रू $\frac{२}{२}$ । अथ रश्मिषु द्वयं योज्यं त्रयं हेयम् । तत्रानयोरन्तरे रूपमेवर्णमवशिष्ट-मतो विरूपकिरणार्द्धं गुण इत्यपि युक्तम् । अथ स्फुटगुणोपपत्तिः ॥ गर्गः । ध्रुवाय हानिः कर्तव्या ततोन्यासु बहुष्वपि ॥ प्राप्तास्वेकैव कर्तव्या या स्यात्तासु महत्तरा ॥ १ ॥ ततोपि गुणना कार्याप्येकैव महती सकृत् ॥ द्वाभ्या वर्गोत्तमे स्वांशे स्वद्रेष्काणे स्वके गृहे ॥ २ ॥ त्रिभिर्वक्रगतस्याथ स्वोच्चराशिगतस्य च ॥ समगुणस्थले एकान्यतरैव गुणना कार्या । विषमगुणस्थले महती सकृद्गुणना कार्या तदेतदर्थ-लाभायैव सकृत्पदं पुनरुपात्तम् । अत्र त्रिगुण एव महद्गुणस्तात्त्रि-गुणमिति विहाय महत्पदोपादानस्य निर्बन्धेनाचार्यकृत्वं तु बहुघ्नतायामेक तु यद्भूरि तदेव कार्यमिति वराहवाक्यं भूरिपदग्रह-णस्य चेदं तात्पर्यम् । यत्त्रिगुणत्वे नो नाग्रहः किं तु युक्तिसिद्धमेकं भूरिगुणनं कार्यम् । युक्तिसिद्धं तु मूलेन गुणनम् । विषमगुणस्थले च स्वल्पादन्यतरस्मान्मूलमपि भूरि भवत्येव । लघुजातके । वर्गो-त्तमस्वराशिद्रेष्काणनवांशकै सकृद्द्विगुणम् । वक्रोच्चयोस्त्रिगुणितं द्वित्रि-गुणत्वे सकृत्त्रिगुणम् ॥ अस्यार्थो मिश्रोक्तः वर्गोत्तमादिवशाद्बहुवारं द्विगुणत्वप्राप्तौ सकृदेकवारं द्विगुणं कार्यम् । वक्रवशेनोच्चवशेन च त्रिगुणत्वे प्राप्ते सकृत्त्रिगुणितं कर्तव्यम् । अत्रान्यगुणप्राप्तावे-तयोरेव प्राप्तावन्यतरगुणनियमनावश्यकत्वे सकृत्पदानुषङ्ग आवश्य-

कः । वर्गोत्तमेत्याद्युक्ते सकृद्द्विगुणे व्यवहारार्थमाश्रयगुणेति धृतसंज्ञे प्राप्ते वक्रोच्चयोरित्याद्युक्ते सकृत्त्रिगुणे स्फुटगुणकसंज्ञे च प्राप्ते सकृत्त्रिगुणे भूरिगुणं कर्तव्यमिति । अथ वक्रोच्चगे सामान्यतस्त्रयाणां वर्गेण गुणने प्राप्तेऽन्यतरस्मिंस्त्रिमिते गुणके नियमितेयोन्मूलेन गुणनमुक्तं पदस्य वर्गस्य चयो मूलम् । किं च । प्रकृते त्रयाणां वर्गेण सामान्येन गुणने प्रसक्तेऽन्यतरस्मिंस्त्रिमितगुणनियमनलक्षणो विशेष उक्तः । विशेषे च सामान्यसंबन्धस्यावश्यमपेक्षेति विशेषलक्षणेऽन्यतरत्रिमितगुणे सामान्यवर्गस्य तन्मूलत्वमेव संबन्धः । तथा सति तन्मूलत्वपुरस्कारेणैव गुणने प्रसक्ते तन्मूलेनैव गुणनं तात्पर्यतः सिद्धम् । विषमद्वयघातोऽपि करणीरूपो वर्ग एव भवतीति द्वित्रिगुणत्वे स्फुटगुणाश्रयगुणघातस्थलेऽपि मूलेनैव गुणनमागतम् । यत्तु बहुताडनसंप्राप्तो यो करोत्येकवर्गणाम् । वराहमिहराचार्यैस्सा न दृष्टा पुरातनैरिति सारावलीवाक्यस्वरसाद्वराहमतं दूषयता केशवार्केण पृथगपि द्विगुणे त्रिगुणे सकृत्त्रिगुणमित्यवक्लृप्तिरिव यत्न इति विवाहवृन्दावनेऽभिधायि तद्वर्गादिमुनिवचन्यविरोधादसदेवेति बोध्यम् ।

अथाश्रयगुणकमाह ॥

यः स्वाधीष्टसुहृत्समार्यधिरिपोर्वर्गे धृतिरिष्विलाविश्वाङ्केषु
गुणा गृहे द्विगुणिता योगः क्रमात्तं हरेत् ॥ तद्भे
षड्सुगोंशुमद्भूतिजिनैः षड्भैश्च वर्गोत्तमस्वांशभव्यं-
भगते सदा रसगुणैः स्यादाश्रयाख्यो गुणः ॥ १७ ॥

यो ग्रहः स्वाधीष्टसुहृत्समार्यधिरिपोर्वर्गे गृहादिसप्तवर्गे स्यात्तस्य धृतिरिष्विला इत्यादयोऽङ्काः क्रमात् स्थाप्याः । चकारेण वर्गे इत्यनुषङ्गः स्वादीनां यस्मिन् गृहादौ वर्गे ग्रहः स्यात्तत्र वर्गे धृत्याद-

योङ्काः क्रमात्स्थाप्या इत्यर्थः । स्वश्च अधीष्टश्च सुहृच्च समश्च अरिश्च अधिरिपुश्च एषां द्वन्द्वैकत्वं क्लीबता च । उक्तपुंस्कत्वात्पुंवद्रूपम् । धृतिरष्टादश । इष्विलाः पञ्चदश । इरा भूवाक्सुराप्सुस्यादितिरान्तेषु पाठादेकान्त एवेराशब्दो नतु लान्त इति कश्चित् । तन्मन्दम् । अस्ति च लान्तोपीलाशब्दः भूगोवाचस्त्विडा इला इति त्रिकाण्डीस्मरणात् । इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि चेति मेदिनीकोशाच्च । प्रहृष्टपुष्टाखिलगोकुलामिलामिनि भास्करोक्तिरप्यनुकूला । विश्वे त्रयोदश । अङ्का नव । इषवः पञ्च । गुणास्त्रय इति । गृहे गृहवर्गे धृत्यादयो द्विगुणिताः स्थाप्याः । यथा स्वगृहे षट्त्रिंशदधिमित्रगृहे त्रिंशदित्यादि तेषां सप्तसु वर्गेषु स्थापितानामङ्कानां योगः कार्यः । तं योगं नष्टे तेषां स्वाधीष्टादीनां भे राशौ ग्रहे सति क्रमात्षड्भिस्त्वित्यादिभिरङ्कैः षड्घ्नैः षड्गुणितैः हरेत् । भजेत् । गणक इति शेषः । षट् प्रसिद्धाः वसवोष्टौ गावो नव अंशुमन्तो द्वादश धृतयोष्टादश जिनाश्चतुर्विंशतिः एभिः षड्घ्नैरङ्कैस्तं योगं भजेदित्यर्थः । क्रमादिति काकाक्षिगोलकन्यायादुभयत्र संबध्यते । वर्गोत्तमस्वांशत्र्यंशगते ग्रहे सदा रसगुणैः षट्त्रिंशता तं योगं हरेत् । अंशाश्च त्र्यंशाश्च अंशत्र्यंशाः । स्वस्य अंशत्र्यंशाः स्वांशत्र्यंशाः वर्गोत्तमाश्च स्वांशत्र्यंशाश्च वर्गोत्तमस्वांशत्र्यंशाः । यत्र राशौ ग्रहस्तस्यैव राशेर्नवमांशे चेद्भवेत्तदा स नवमांशो वर्गोत्तमांशः । तदुक्तम् । राशिर्यः स्यात्सोपि नन्दांशकश्चेद्गतस्तस्मिन्नेव वर्गोत्तमांश इति । स च कस्मिन् राशौ कतमो भवति । तदुक्तं बृहज्जातके । वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यपर्यन्तगाः शुभफला नवभागसंज्ञा इति । स्वांशः स्वराशिनवमांशः स्वत्र्यंशः स्वराशिद्रेष्काणः तेषु वर्गोत्तमादिषु गते वर्तमाने ग्रहे षट्त्रिंशता भजेत् न तु प्रोक्तहरेणेत्यर्थः । एवं हरेण भजने यल्लभ्यते रूपादि स आश्रयनामा गुणो भवेत् ॥

अथैवं सिद्धस्याश्रयगुणकस्य कदाचित्संस्कारमाह ॥

चेद्वर्गोत्तमपूर्वगोऽध्यरिसुहृद्भे तद्गृहाङ्कात्त्रिपड्लब्ध्योनो
युगरिष्टभेऽब्धिनवकाप्त्या स्वे समे केवलः ॥
कार्यस्त्वाश्रयकः सः ॥

चेद्ग्रहो वर्गोत्तमपूर्वगः वर्गोत्तमनवमांशस्यनवमांशस्वद्रेष्काणान्यतरस्मिन्वर्तमानः सन्नध्यरिसुहृद्भे अधिरिपोरधिमित्रस्य वा गृहे भवेत् । तत्तदा गृहाङ्कात्पूर्वं गृहवर्गे स्थापितादङ्कात्त्रिपड्भिर्लब्ध्या प्राप्तफलेन स आश्रयकः ऊनो युक् कार्यः आश्रय एव आश्रयकः स्वार्थे कप्रत्ययः । आश्रयगुणक इत्यर्थः । चेद्वर्गोत्तमपूर्वगः सन्नरिष्टभे शत्रुराशौ मित्रराशौ वा स्यात्तदा गृहाङ्कादब्धिनवकैश्चतुर्नवत्या आप्त्या लब्धेन ऊनयुक्कार्यः । एतदुक्तं भवति । मित्राधिमित्रगेहयोर्गृहाङ्कात्स्वहरेण फलं पुरानीताश्रयगुणे युक्तं कार्यम् । अधिशत्रुशत्रुगृहयोस्तु हीनं कार्यमिति । अत्रोपपत्तिः । वर्गोत्तमस्वराशिद्रेष्काणनवांशके सकृद्द्विगुणमिति लघुजातकोक्तेर्वर्गोत्तमादौ द्वितयं गुण इत्युपपन्नम् । रिपुराशौ विभागोनमिति सारावल्यामभिहितत्वाच्छत्रुराशौ त्र्यंशहानिः । छेदघ्नरूपेषु लवा धनर्णमेकस्य भागा अधिकोनकाश्चेदिति पाटीसूत्रेण तलस्थहारेणेत्यादिना वा समच्छेदसूत्रेण वा सिद्धेन त्र्यंशोनरूपगुणेन त्र्यंशहानिरेव भवतीति त्र्यंशोनं रूपं $\frac{२}{३}$ गुणः । अधिशत्रुराशौ अर्द्धशत्रुत्वस्याधिक्यात्स्वार्द्धसहिततृतीयांशस्य प्रागुक्तसूत्रैः सिद्धस्यार्द्धात्मकस्य ह्रासः अयं रूपात् च्युतो जातोऽधिशत्रुराशावर्द्धमितो गुणः $\frac{१}{२}$, एवं मित्रराशौ युक्त्या तृतीयांशस्य वृद्धिः । तलस्थहारेणेत्यादिना सिद्धेन त्र्यंशाधिकरूपेण गुणेन त्र्यंशोपचय एव भवतीति सत्र्यंशं रूपं $\frac{४}{३}$ गुणः । एवमधिमित्रतायां आधिक्यात्स्वार्द्धयुतत्र्यंशस्य पूर्वसूत्रेण सिद्धस्यार्द्धात्मकस्य वृद्धिः । इयं रूपान्विता जातोऽधिमित्रराशौ गुणः $\frac{३}{२}$ समगृहे समोऽर्द्धमित्रमर्द्धशत्रुश्चेति यावदर्द्धमित्रत्वात्तावती वृद्धिरर्द्धशत्रुत्वात्तावती हानिरिति हानिवृद्ध्योरभावात्

रूप गुणः १ समो न मित्र न शत्रुरिति पक्षेऽपि न वृद्धिर्नापि हानिः । अतो रूपमेव गुण इति युक्तम् । लघुजातके सारावल्यामप्यंशायुषि शत्रुराशौ वक्रं विहाय हानिः स्यादिति नोक्तम् ॥ क्वचिदुक्तमप्यस्ति । तन्मते भेदेन पूर्वमतमेवाङ्गीकृतमिति प्राहुः । अथ शत्रुमित्रादिराशौ स्वनवांशे स्वद्रेष्काणे वा स्थिते स्वराशौ शत्रुमित्रादीनां नवांशे द्रेष्काणे वा स्थिते ग्रहे सामान्यप्राप्ते गुणे राशिनवांशद्रेष्काणकृततारतम्याद्बलवयं युक्तमेवं होरादितारतम्यादपि । समय एव गुणे सप्तवर्गकृततारतम्यविधिस्वीकारेत्यन्तायुक्ता बहुवर्गणैव स्यादतः कारणाद्विभक्ते एकस्मिन्गुणे राश्यादिस्थानेषु विभागेनावस्थानमागतम् । इह होरादयः षट् समा एव राशेस्तु होरादिवर्गाद्द्विगुणं गृहमिति यवनवाक्ये द्वैगुण्यमस्तीत्यष्टौ वर्गास्तेनाष्टभक्तो गुणो होरादिवर्गेषु । अयमष्टभक्तो द्विगुणश्चतुर्भक्तगुणात्मको गुणो राशिस्थाने स्थाप्य इति सिद्धम् । अतः सम्यगुक्तं श्रीपतिभिः ॥ वर्गोत्तमे स्वभवने स्वनवांशके च स्वत्र्यंशके च गुणको द्वितय निरुक्तः । अध्यर्द्धरूपमधिमित्रगृहे सुहृद्भे सत्र्यंशकं समगृहे खलु रूपमेव ॥ १ ॥ त्र्यंशोनित रिपुगृहेऽप्यरिभे दलं स्यादेभ्यो गुणो भवति यः खलु कश्चिदेकः । वेदोद्धृतः स भगुणो गणकैर्निरुक्तो होरादिवर्गगुणकस्तु भवेत्तदर्द्धमिति ॥ २ ॥ अथाधिमित्रस्य स्वमित्राभ्यां क्रमादर्द्धन्यूनत्वाद्वाधिकत्वमिति पूर्वयुक्त्या स्वगृहमित्रगृहगुणयोरनयोः $\frac{2}{1}$ । $\frac{4}{3}$ रन्तरार्द्धेऽस्मिन् $\frac{1}{3}$ स्वगृहगुणादूने मित्रगृहगुणे वा युक्ते जातोऽधिमित्रसंबन्धिनि सप्तवर्गे गुणः $\frac{5}{3}$ मित्रसंबन्धिवृद्धिर्निजार्द्धसहितोऽधिमित्रसंबन्धिवृद्धिरनुलोमविधिना तृतीयांशेनाधिमित्रसंबन्धिवृद्धिर्मित्रसंबन्धिवृद्धिर्भवतीत्यधिमित्रसंबन्धिवृद्धिरियं $\frac{2}{3}$ स्वतृतीयांशेनानेन $\frac{2}{9}$ ऊना जाता मित्रसंबन्धिवृद्धिः $\frac{4}{9}$ रनया प्राग्वद्गुणोऽयं $\frac{13}{9}$ मित्रसंबन्धिनि सप्तवर्गे समसंबन्धिनि तु रूपमेव । मित्राधिमित्रयोर्यावती वृद्धिस्तावत्येवाभिशत्र्वधिशत्र्वोर्हानिरिति जातौ शत्रुसंबन्धिनि अधिशत्रुसंबन्धिनि

तद्दिश मेव पुनर्गुणनमिति बोध्यम् । अथैवं राशिस्थानस्थगुणमात्रे पुनरधिमित्रादिगुणकापेक्षायां प्रथमगुणकैरपरगुणकैर्वा गुणनीयमिति संदेहादेकतरपक्षानवलम्ब युक्त्या गुणकान्तराणि साध्यन्ते । यथा प्रथमोऽधिमित्रगुणः ३/२ द्वितीयः ५/३ अथ यदि गुणयोरनयोरेकाकारता भविष्यत्तदान्यतरेणैव चरितार्थता जाता स्यादिदानीं त्वनयोरेकाकारता युक्त्या योगार्द्धे विश्रान्तेति क्रमिकयोरनयोर्योगार्द्धं १९/१२ गुणो युक्तः । अन्यच्च । प्रथममित्रगुणात्प्रथमोऽधिमित्रगुणः सिद्धो द्वितीयसिद्धो जातायामधिमित्रसंबन्धिवृद्धिस्तृतीयांशेन मित्रसंबन्धिवृद्धिरित्यधिमित्रवृद्धेस्तृतीयांशे मित्रगुणे योजिते सत्यधिमित्रगुणो भवतीति युक्त्याऽधिमित्रसंबंधिवृद्धेरस्या २/३ स्तृतीयांशो २/९ यद्यधिमित्रगुणानपेक्षे प्रथममित्रगुणेऽस्मिन्नेव ४/३ योज्यते तदयमप्यपरोऽधिमित्रगुणो युज्यते १४/९ । एवं पुनरपि गुणद्वये संदेहतादवस्थ्यादनयोः १९/१२ । १४/९ योगार्द्धसूक्ष्मोयमेकोऽधिमित्रगुणः सिद्धः । अथ ११३/७२ हारांशयोर्द्विसप्ततिसप्तमांशेन ७२/७ अपवर्ते कृते लब्धा हरस्थाने सप्त ७ अंशस्थाने स्वल्पान्तरमुपेत्य प्राप्ता एकादश । एवमयं गुणोऽधिमित्रराशौ ११/७ अस्य वृद्धा ४/७ स्त्र्यंशेनया ८/२१ प्राग्वदयं मित्रगुणः २९ । २१ समगुणो रूपमेव १ मित्राधिमित्रयोर्यावती वृद्धिस्तावत्येवामित्राध्यमित्रयोर्हानिरिति शत्रुगृहगुणा १३/२१ धिशत्रुगुणो ३/७ अतः सूक्तं श्रीपत्यार्यैः । नगांशका रुद्रमिता अधीष्टराशौ सुहृद्वेश्मनि मूर्छनांशाः । नवाश्विनो रूपमुदासराशौ कुद्व्यंशका विश्वमिता द्विपद्भे ॥ नयो नवाश्विनो ... नगांशा ह्यधिशत्रुराशावेते भसंज्ञा निजराशिवर्जम् ॥ वर्गोत्तमात्मीयनवांशदृक्कस्थिते ग्रहे तु द्विगुणं गुणः स्यात् ॥ यतेऽधीष्टादिगुणैर्निहन्याद्द्रव्हीरित राशिगुणं पुनस्तामिति ॥ इत्याश्रयगुणोपपत्तिः सुन्दरमिश्रोदिता ॥ प्रकृतमनुसरामः ॥ स्वगृहे गुणकः २ वेदाहृतः सभगुणो गणकैर्निहतो होरादिवर्गगुणकस्तु भवेत्तदर्द्धमित्युक्तेरयमनुभक्तो १/४ ग्रास: अयमनन्तरतादृकेन द्विकेन गुणितो ग्रास: स्वांश-

न्धिनि होरादिषड्वर्गे गुणः $\frac{१}{२}$ अथांशहारावष्टादशभिर्गुणितौ $\frac{१८}{३६}$ जातोऽयं स्वहोरादिषड्वर्गे गुणः । एवमधिमित्रगृहे गुणः $\frac{३}{२}$ अष्टभक्तः $\frac{३}{१६}$ अनन्तरताडकेन $\frac{५}{३}$ गुणितो जातो $\frac{१५}{४८}$ अधिमित्रसंबन्धिहोरादिषु गुणः । एवं मित्रगेहगुणो $\frac{४}{३}$ अष्टभक्तो $\frac{१}{६}$ नन्तरगुणेन $\frac{१३}{९}$ गुणितो जातो मित्रसंबन्धिनि होरादिषड्वर्गे गुणः $\frac{१३}{५४}$ एवं समगृहगुणोऽष्टभक्तोऽनन्तरताडकेन गुणितो जातः $\frac{१}{८}$ एतस्य हरांशयोर्नवभिर्गुणने जातो गुणः $\frac{९}{७२}$ एवं शत्रुगृहगुणो $\frac{२}{३}$ अष्टभक्तो $\frac{१}{१२}$ नन्तरताडकेन $\frac{५}{९}$ गुणितो जातः शत्रुसंबन्धिहोरादिवर्गे गुणः $\frac{५}{१०८}$ एवमधिशत्रुगृहगुणो $\frac{१}{३}$ अष्टभक्तो $\frac{१}{२४}$ नन्तरताडकेन $\frac{१}{२}$ गुणितो जातः $\frac{१}{४८}$ । अथास्य हरयोस्त्रिभिर्गुणने जातोऽधिशत्रुसंबन्धिनिहोरादिषड्वर्गे गुणः $\frac{३}{१४४}$ । एवमेते गुणाः स्वाधिमित्रादिगृहस्थे ग्रहे सति स्वाधिमित्रादिसंबन्धिहोरादिस्थानीया आगताः । एवमन्यराशावन्यहोरादिस्थे ग्रहे त एव गुणकाः स्थाप्याः । राशिगुणस्यार्द्धं होरादिगुण इति राशिस्थाने तु द्विगुणाः स्थाप्याः । पश्चादेषां योगे कृते आगतगुणको भवतीत्युपपन्नम् । दर्शनम् ।

| स्व० | अधि | मि० | स० | श० | अ० |
|---|---|---|---|---|---|
| १८ | १५ | १३ | ९ | ५ | ३ |
| ३६ | ४८ | ५४ | ७२ | १०८ | १४४ |

ननु न ह्यस्ति राजनिर्देशो येन स्वसमाधिवैरिसंबन्धिहोरादिगुणानामेव हारांशाः क्रमेणाष्टादशनवषड्भिर्गुणनीया अन्येषां तु न हन्तव्या इति तस्मादष्टादशादिभिर्गुणनं व्यर्थम् । न च यावानेवाष्टादशानां षट्त्रिंशदंशस्तावदेव रूपस्यार्द्धमित्यादि फले विशेषाभावादष्टादशादिभिः स्वादिगुणहारांशगुणनं सार्थकमेवेति वाच्यम् । गुणान्तरेऽपि समाङ्केन हारांशगुणने फलावैचित्र्यदर्शनादुक्तदोषतादवस्थ्यात् । तस्मादष्टादशादिभिः स्वादिगुणहारांशगुणना हारांशगुणनं गौरवान्निष्प्रयोजनत्वाच्च व्यर्थमेव । अस्तु वा स्वसमाधिशत्रुगुणकानामेव समाङ्केन हारांशगुणनम् । परं तु अष्टादशादिभिरेव हारांशा हन्तव्या इतरैर्न हन्तव्या इदमपि निष्प्रमाणम् । किं च मित्रराशौ मित्रहोरास्थे ग्रहे यावान्होरास्थानीयो गुणः $\frac{१३}{५४}$ तावानेव शत्रुराशावपि मित्रहोरास्थे

ग्रहे गुणः स्थाप्य इत्युक्तं तदप्यसंगतम् । यतस्तत्र ग्रचुराशिमित्र-होराजन्येन गुणान्तरेण भाव्यम् । अन्यथा मित्राधिमित्रादिगुणसाधनप्रयासवैयर्थ्यापत्तिः । अपि च । सप्तवर्गस्थापितानां सर्वेषां गुणकानां योगः कार्य इत्युक्तं तत्र पृच्छ्यते । किं सर्वे गुणकाः सदृशच्छेदा विसदृशच्छेदा वा । आद्ये किं सार्वत्रिकाः कादाचित्का वा । नाद्यः । सर्वत्र सर्वगुणकानां समच्छेदत्वस्य बाधितत्वात् । नापरः । भौमादीनां होराधिपत्यभावात्पुष्पवतोस्त्रिंशांशाधिपत्याभावाच्च कादाचित्कस्यापि समच्छेदत्वस्यासंभवात् । नापि चरमः । असमच्छेदानां योगस्यायुक्तत्वात् । अन्यथा योगोन्तरं तुल्यहरांशकानामिति सिद्धान्तो व्याहन्येत । तस्मात्सप्तवर्गस्थगुणानामैक्यं कार्यमित्युक्तम् ॥ अत्र केचित् । नहि वयं सप्तवर्गस्थगुणकानां समच्छेदत्वं ब्रूमो येन भवदुक्तो दोषः प्रसज्येत । किं तु विसदृशहरा एव गुणास्तेषां समच्छेदान्विधाय योगः कार्य इति वदामस्तेन सर्वं समञ्जसमेवेति । स्यादेतत् समच्छेदविधानेन योगः कार्य इत्याचार्येण यद्युक्तं स्यात् । तस्मात्कथमेतदिति दुस्तरजातकार्णवसंदेहतरङ्गसङ्गभङ्गितहृदया होरिका मिथः परिभाषन्ते । अत्र ब्रूमः ॥ यस्य राशौ ग्रहस्तस्यैव चेद्धोराद्रेष्काणान्यतमवर्गे स्यात्तदा तत्रापि तावानेव गुणकोऽथ तद्गुणकराशिगुणकयोः समच्छेदत्वाद्योगोऽपि युक्त एवेत्यत्र न कोपि विवादः । होरास्थगुणापेक्षया भगुणकस्यांशमात्रद्वैगुण्येपि सदृशच्छेदत्वमव्याहतमेवेति हृदयम् । अथान्यराशावन्यहोरादिस्थे ग्रहे त्रैराशिकेन गुणान्तराणि यावत्साध्यन्ते तावत्त एव समानराशिहोराद्युक्तगुणा उत्पद्यन्ते किं तु राशिगुणहरतुल्यहरा अतस्त एव गुणकाः स्थाप्याः समच्छेदत्वाद्योज्याश्चेति सर्वमुपपन्नम् । सप्तवर्गगुणानां समच्छेदत्वे सिद्धे सर्वगुणकांशयोग एकेनैव हरेण भाज्य इति लाघवाद्गुणकांशा एव स्थापिताः पश्चात्तेषां योगो राशिगुणस्य हरेणैव भाज्य इति सम्यगुक्तमाचार्यचरणैः ॥ अथोदाहरणम् । खेः

सप्तवर्गस्वामिचक्रं सप्तवर्गस्थगुणकचक्रं च अथ शत्रुसंबन्धिहोरादि-

| गृ | हो | द्रे | स | न | द्वा | त्रि |
|---|---|---|---|---|---|---|
| बुधः | चन्द्रः | बुधः | भौमः | गुरुः | भौमः | बुधः |
| शत्रुः | समः | शत्रुः | अ.मि | सम | अमिः | शत्रु |

स्थोयं गुणो $\frac{५}{१०८}$ द्विगुणो जातो गृहसंबन्धिगुणः $\frac{१०}{१०८}$ । अत्रांशस्थाने दशसन्तीति ते स्थापिताः पश्चात्पद् गुणधृति-

| गृ | हो | द्रे | स | न | द्वा | त्रि |
|---|---|---|---|---|---|---|
| १० | ६ | ५ | १५ | ६ | १५ | ५ |

भिर्भाज्या इति सूक्तं द्रेष्काणत्रिंशांश-योरपि शत्रुसंबन्धित्वात्तत्रापि स एव गुणकः $\frac{५}{१०८}$ । समच्छेदत्वात्तद्योगोऽपि युक्त एवेति न किंचिद्विरुद्धम् । अथ होरास्थानस्थगुणः साध्यते । तत्र समराशिस्थे सति समहोरास्थो गुणः । $\frac{६}{७२}$ अपेक्षितस्तु शत्रुराशौ समहोरायां गुण इति शत्रुराशिपरिणामोऽस्य गुणस्य न्याय्यः । तत्र त्रैराशिकम् । यदि रूपचतुर्थांशमिते समगृहगुणेयं होरास्थानस्थगुणो $\frac{६}{७२}$ लभ्यते तदा रूपषडंशमिते शत्रुगृहगुणके कियानिति । अत्र छेदं लवं च परिवर्त्येत्यादिना जातोयं गुणः शत्रुराशौ समहोरायाम् $\frac{६}{१०८}$ । अत्रांशस्थाने नवातोन्यराशावपि समहोरायां नवैव स्थाप्या इत्युपपन्नम् । हरोऽपि राशिगुणस्य हरेण तुल्य इति समच्छेदत्वाद्योगोऽपि युक्त एव । किंच यदि पूर्वं समसंबन्धिहोरास्थो गुणको नवभिर्न गुण्यते तदा शत्रुराशौ समहोरायां गुणः । $\frac{१}{१२}$ । अस्य पुना राशिगुणेन सार्धं योगे क्रियमाणे मिथो हराभ्यामित्यनेन समच्छेदत्वकरणमावश्यकम् । तत्र द्वादशभिरष्टोत्तरशतेऽपवर्तिते नव लब्धास्तै रूपद्वादशांशमितगुणकस्य हारांशगुणने जातः स एव गुणः $\frac{६}{१०८}$ । एवमपि समच्छेदत्वकरणावसरे समगृहगुणो नवगुणो भविष्यतीति पूर्वमेव महामतिभिराचार्यैर्नवगुणः प्रोक्त इति न कोऽपि दोष इत्यवगन्तव्यम् । एवं स्वाधिशेषगुणकयोरपि धृतिचयाभ्यां *गुणनं नानर्थकमित्युदाहरणेन बोध्यम्* । अथ शत्रुराशावधिमित्रसप्तमांशे गुणोनुपातेन । यद्येतावति $\frac{३}{८}$ अधिमित्रगृहगुणेयमधिमित्रसप्तांशगुण $\frac{१५}{४८}$ स्तदा शत्रुगृहगुणेऽस्मिन् $\frac{१}{६}$ कियानिति छेदं लवं

च परिवर्त्यैन्यादिना जातः $\frac{१५}{१०८}$ स एव गुणको राशिगुणस्य हरतुल्यहरोऽतस्त एव गुणकाः स्थाप्याः पश्चाद्राशिगुणस्यैव हरेण हरणीया इति सर्वं परिच्छिन्नम् । अथ वर्गोत्तमस्वांशच्यंशगते ग्रहे गुणो द्विमितो वेदोद्धृतो जातो भगुणकोऽर्द्धमितः $\frac{१}{२}$ । यदि तनद्ग्रहे गुणे तत्तद्रोराशिगुणको लभ्यते तदास्मिन्नर्द्धमिते वर्गोत्तमादिगुणे किमिति त्रैराशिकेन गुणान्तराणि साध्यन्ते तावन्त एव गुणाः षट्त्रिंशत्तुल्यहरा उत्पद्यन्ते । गृहस्थानेऽपि पूर्वप्रकारेण यो गुणकस्तद्धरस्थाने यावत्षट्त्रिंशत्स्थाप्यन्ते तावद्वर्गोत्तमान्यतरयशात्प्राग्गुणकानन्तरताडकघाततुल्य एव गुणक उत्पद्यते । अतस्तचाङ्कयोगं षट्त्रिंशतैव भजेन्न तु प्रोक्तहरेणेत्यपि साधु । अथ वर्गोत्तमादिचिकान्यतमस्थो ग्रहो यद्यधिशत्रुगेहे भवति तदा गृहगुणकस्यास्य $\frac{६}{३६}$ त्रयो नगांशा ह्यधिशत्रुराशावित्युक्तेरयं गुणः । $\frac{३}{६}$ । तत्र गुणनं खण्डाभ्यामपि संभवतीत्येतस्य खण्डद्वयं कृतं तत्रैकम् $\frac{२}{६}$ । अपरं च $\frac{४}{६}$ । तत्र प्रथमखण्डेन गुणने गुणहरयोस्तुल्यत्वान्नाशे कृते पूर्वानीत आश्रयगुणको लब्धः । द्वितीयखण्डेन तु राशिगुणे गुणाहतिश्छेदवधेनभक्तेति भिन्नगुणनरीत्या गुणिते चतुर्भिरपवर्तिते च गृहाङ्कस्यैवाधनखण्डगुणितत्वाद्गृहगनस्य विषष्टितमो भागो भवतीति गृहाङ्कविषष्टिभागोनः पूर्वानीताश्रयगुणको वास्तव आश्रयगुणो भवतीत्युपपन्नम् । एवमधिमित्रगृहे गुणः । $\frac{११}{६}$ अस्यापि खण्डद्वयं विधाय गुणने गृहाङ्कद्विषष्ट्यंश एव भवतीति तथोक्तम् । परमियांस्तु विशेषः । अत्र सप्तवसुमिते शकादयानां धनखण्डे कृते विषष्टिभागो योज्य इति । अथ शत्रुगृहगुणः $\frac{१३}{२१}$ अयमीदृशः कल्पितः । $\frac{२१}{१९}$ । अनेन पुरानीताश्रयगुणेन गुणने गुणकभाजकयोः समत्वादपगमे कृते स एव जातः । गुणकांशस्थानेऽष्टावधिका गृहीता इत्यष्टानामेकविंशत्यंशेन गुणितराशिगुणा $\frac{१०}{३६}$ लब्धं पुरानीताश्रयगुणाच्छोध्यं तत्र षट्त्रिंशदेकविंशतितुल्यहरयोर्घातस्यास्य ७५६ मानत्र्यपवर्ते कृते लब्धा सार्द्धा

चतुर्नवतिः ९४ । ३० स्वल्पान्तरत्वाच्चतुर्नवतिमेव गृहीत्वा गृहाङ्क-चतुर्नवतिभागोनः पूर्वानीताग्र्यगुणकः कार्य इत्युपपन्नम् । अथ वर्गोत्तमादिविक्रान्यतरस्थो ग्रहो यदि मित्रगृहे भवति तदायं गुणकः । $\frac{२९}{३१}$ । अस्यापि धनखण्डे कृत्वा गृहाङ्कचतुर्नवतिभागान्वितः पूर्वाग्र्यगुणो वास्तवो भवतीति निष्पन्नम् । वासनाबाह्यास्त्वधिरिपुसुहृद्गृहे त्रिपड्लब्ध्योनो मित्रारिभे तु चतुर्नवत्यंशयुतो गृहाङ्कः कार्य इति वदन्ति तदतीव तुच्छमित्यवगच्छ । समगृहे तु रूपमुदासराशावित्युक्तत्वाद्रूपेण गुणने विकृतत्वाद्यथास्थित एव गुणकः । स्वराशिस्थे वर्गोत्तमादिविक्रान्यतमस्थे च ग्रहे राशिवशाद्वर्गोत्तमादिवशादपि द्विमितगुणकप्राप्तौ सकृद्गुणमिति वाक्येनैकस्यैव गुणकस्य नियमनादपरद्विगुणमर्वेय.बाध शवातः सम्यगुक्तं स्वे समे केवल इति ॥ इत्याग्र्यगुणकोपपत्तिः ॥

कर्मयोग्यगुणकमाह ॥

तत्स्फुटचतेर्मूलं स योग्यो गुणः ॥

स्पष्टम् । उपपत्तिः प्रागुक्तैव ॥

अथायुर्दायोपयोगिदायांशानाह ॥

खेटानां च तनोर्लवाः स्वयुगहृच्छेषा इहांशायुषः ॥ १८ ॥

ग्रहाणां लग्नस्य च लवाश्चत्वारिंशद्भक्तशेषाः सन्तोंऽशायुषि लवा भवन्ति ॥ अत्रोपपत्तिः ॥ ग्रहभुक्तनवांशराशितुल्यं वर्षमायुः समुपैति सत्यवाक्यमित्युक्तेर्मेषनवमांशस्थे ग्रहे एकवर्षमायुर्वृषांशस्थे द्विवर्षं एवं क्रमेण मीनांशे द्वादशवर्षाणीति निर्णीतम् । तत्र मेषादेश्चत्वारिंशदंशान्ते मीनांशान्तो भवतीति चत्वारिंशदंशैरेकः परिवर्तो लभ्यते तदैवं ग्रहलग्नांशैः कतीति चत्वारिंशद्भक्ता ग्रहलग्नांशा गतपरिवर्ताः स्युः शेषं वर्तमानपरिवर्तस्य गतं भवति । कलानां द्विशत्यै २०० का नवांशस्तत्समान्येव वर्षाणीति द्विशतकलाभिरेकं

र्षं तदा दायांशापरपर्यायशेषांशकलाभिः किमिति । वर्षाद्यमंशायुर्भवति । अत एव वक्ष्यते । दायांशोत्थकलाः स्वयोग्यगुणकघ्नाः खाभ्रनेत्रोद्धृता इति । अतः सर्वं सयुक्तिकमेव ॥

अथ चक्रार्द्धहानिमाह ॥

षड्भाल्पे सति खेचरोन उदयेऽस्यांशोद्धृतैः खाग्निभिस्त्वे-
काल्पेऽस्य च खाग्निभाजितलवैः सौम्योनिते त्वर्द्धितैः ।
ऊना भूर्गुण एकभे द्विबहुषु त्वेकस्य बह्वोजसः कार्यास्तद्गु-
णिताः स्वदायजलवास्त्वक्रार्द्धहानिस्त्वियम् ॥ १९ ॥

खेचरोन उदये षड्भाल्पे सति अस्यांशोद्धृतैः खाग्निभिरूना भूर्गुणः स्यादित्यन्वयः । अयमर्थः । ग्रहो लग्नाच्छोध्यः शेषं यदि षड्भाधिकं तदा नैषा हानिः । यदि च षड्भाभ्यल्पं तर्हि अस्य षड्भाल्पस्य खेचरोनोदयस्य राशयस्त्रिंशता गुण्या अधःस्थांशयुक्ता अंशा भवेयुस्तैस्त्रिंशद्भाज्या लब्ध्येन भूरेकः हीनः कार्यो गुणकः स्यात् । तुर्विशेषे । एकाल्पे खेचरोनोदये अस्य खेचरोनोदयस्य खाग्निभिस्त्रिंशता भाजितलवैरूना भूर्गुणः स्यात् । तुर्विशेषे । सौम्योनिते उदये शुभग्रहोने लग्ने कृते सति अर्द्धितैरंशोद्धृतैः खाग्निभिरर्द्धितैः खाग्निभाजितलवैर्वा ऊना भूर्गुणः स्यात् । तुर्विशेषे । एकभे द्विबहुषु द्व्यादिषु ग्रहेषु सत्सु बह्वोजसः एकस्यैव गुणः कार्यः, बहु ओजो वीर्यं यस्येति बह्वोजास्तस्य एकराशिस्थानां मध्ये यो रूपषष्ठ्यंशाधिकबली तस्यैव गुणः कार्य इत्यर्थः । यदा तु रूपषष्ठ्यंशादिबलसाम्यं स्यात्तदा सर्वेषामपि गुणः कार्य इति मिश्राः प्राहुः । वस्तुतस्तु नैसर्गिकबलमेतद्बलसाम्येऽस्मादधिकचिन्तेति लघुजातकसारावल्याद्युक्तेरेकराशिकेत्येके इति गर्गोक्तेश्च यस्य निसर्गबलमधिकं तस्यैव गुणः साध्य इति, अत्र विषष्ठ्यंशस्याल्पातिसूक्ष्मत्वाद्रूपषष्ठ्यंशपर्यन्तं चक्रार्द्धहानिर्भवेत् । गुणकेन दायांशगुणने परिणामे

हानिरेव भवतीति भावः ॥ चक्रार्द्धहानिर्नाम चक्रपातार्द्धहानिः। पातो विपरीतस्तद्विपरीतत्वसंबन्धेन पातशब्दस्य विपरीताभिधेये लक्षणा चक्रस्य यद्विपरीतार्द्धं तत्संबन्धिनी हानिरित्यर्थ इति मिश्राः ॥ अत्रोपपत्तिः ॥ बृहज्जातके ॥ सर्वार्द्धत्रिचरणपञ्चषष्ठभागाः चीयन्ते व्ययभवनादसत्सु वामम् ॥ सत्स्वर्द्धं ह्रसति तथैकराशिगानामेकोंऽशं हरति बलातथाह सत्यः ॥ लग्नाद्द्वादशे राशौ पापग्रहे संपूर्णायुर्हानिरेकादशेऽर्द्धायुर्हानिर्दशमे तृतीयांशस्य नवमे चतुर्थांशस्याष्टमे पञ्चमांशस्य सप्तमे राशौ आयुषः षष्ठांशस्य हानिः ॥ शुभग्रहे तु लग्नाद् द्वादशराशौ स्थितेर्द्धहानिरेकादशे चरणस्य दशमे षष्ठांशस्येत्यादि। द्वादशे सर्वत्र संपूर्णा हानिर्न युक्ता क्वचिदेकत्र युक्ता तस्माद्यावति मेषादिभागे लग्नं लग्नाद्द्वादशेऽपि तावत्येव मेषादिभागस्थिते ग्रहे उत्सर्गसिद्धयुक्त्यात्मकसाम्यात् द्वादशस्थमेषादिसंचव्यावहारिकराशेरवश्यंभावाल्लोक्तयदेकादशराश्यन्तरे लग्नार्वाचीनैकराश्यन्तरात्मके सर्वो भागो हीयते। सर्वेषु जातकतन्त्रेषु भागपर्यायपदपर्यन्तधावनात् सर्वोऽपि भाग एकरूपहरेणायातीत्येकरूपं हरः। एवं दशराश्यन्तरे लग्नार्वाचीनद्विराश्यन्तरात्मकेऽर्द्धो भागः चीयतेऽर्द्धभागोऽपि द्विरूपहरेणागच्छतीति रूपद्वयं हरः। एवं क्रमिकनवभान्तरेऽर्वाचीनत्रिभान्तरे त्रिरूपं हरः। अष्टभान्तरेऽर्वाचीनचतुर्भान्तरे चतूरूपं हरः। सप्तभान्तरेऽर्वाचीनपञ्चभान्तरे पञ्चकं हरः। लग्नात् षड्भान्तरे षड्रूपं परमो हरः। अर्थादन्तराभावे ह्रासाभावः। तस्माल्लग्नार्वाचीनैकराश्युपचयादेकहरोपचय इति सिद्धम्। अथानुपातः। यदि त्रिंशदंशैरेकं रूपं १ हरस्तदेष्टखेचरोनोदयराश्यंशतुल्यलग्नार्वाचीनराश्यंशैः किमिति खेचरोनोदयांशत्रिंशदंशो हरः इति निष्पन्नम्। अनेन सच्छेदेन हरेणायुर्लवा भाज्या लब्धमायुर्लवेभ्यः शोध्यं तत्र छेदं लवं च परिवर्त्य हरस्य शेषः कार्योऽथ भागहरणे गुणनाविधिश्चेति सूचेण हरभक्ता आयुर्लवा ज्ञातम्। आ.ल ३० अथायुर्लवास्त्रिंशता

गुणनीयाः खेचरोनोदयांशैर्भाज्याः अथवा खेचरोनोदयांशभक्तत्रिंशता गुणनीया इति निष्पन्नम् । तत्र खेचरोनोदयांशभक्तत्रिंशद्गुणा आयुर्लवा आयुर्लवेभ्यः शोध्याः खेचरोनोदयांशभक्तत्रिंशदूनरूपगुणायुर्लवा वा फलं सममेव । तद्यथा । आयुर्लवाः १० खेचरोनोदयांशाः ६० खेचरोनोदयांश ६० भक्तत्रिंशता ३० आयुर्लवा गुणिता लब्धमायुर्लवेभ्यः शोधितं जातम् ५ । यद्वा खेचरोनोदयांशभक्तत्रिंशदूनरूपेणानेन ० । ३० आयुर्लवा गुणिताः फलं सममेव जातम् । ५ । अतः षड्भाल्पे सति खेचरोन उदयेस्यांशोद्धृतेः खाग्निभिह्नता भूगुणः स्यादिति युक्तमुक्तम् । एकाल्पे तु खेचरोनोदये त्रिंशद्गुणायुर्लवेभ्यस्त्रिंशदल्पखेचरोनोदयांशैर्भागे ह्रियमाणे फलमायुर्लवाधिकमायुर्लवेभ्यो न शुद्ध्यतीति व्यस्तचैराशिकं कर्तुमुचितमतः खाग्निभाजितलवैह्नता भूगुण इत्यपि सूक्तम् । सत्त्वर्द्धं ह्रसतीत्युक्तेः सौम्योनिते लग्नेऽर्द्धितैः खेचरोनोदयांशभक्तत्रिंशद्भिः खाग्निभाजितलवैर्वोना भूगुणः स्यादित्यपि नितान्तं कान्तम् । अनेन गुणेनायुर्दायागुणनीया अतस्तद्गुणिताः स्वदायजलवा इत्युपपन्नम् । अत्र केचिद्भावबलाच्चक्रार्द्धहानिं कथयन्ति स्म तन्मतमाचार्येण न स्वीकृतम् । गर्गे सत्याचार्ये वराहकल्याणवर्मादिभी राशिपर्यायपर्यन्तं धावनात् । अतो यदुक्तं तत्सर्वं निरवद्यम् । पद्धतिप्रकाशे तु चक्रार्द्धहानिगुणः प्रकारान्तरेण मयोक्तः ॥ एकाल्पके भद्विगुणांशतुल्यं रसाल्पके तद्रहितरूपतुल्यम् । शोध्यं तद्रूनैकमितो गुणः स्याच्छुभोनिते शोध्यदलेन युग्वा ॥ १ ॥ खगोनलग्न इत्यनुपद्गः ॥ शेषं स्फुटम् । आचार्योक्तप्रकारे त्रिंशताऽपवर्त्य कृत्वास्योपपत्तिस्तान्त्रिकैरूह्या । विस्तरभयादस्माकमनुद्योगः ॥ श्रीपतिपद्धतौ शुभग्रहस्य रूपाल्पहरे सत्त्वर्द्धं ह्रसतीति बृहज्जातकोक्तेर्हरार्द्धरूपाच्छोध्यम् । यथास्थितहरोनरूपं हरार्द्धयुक्तं वा गुणो भवतीति द्वयुत्यम् । अतएवाह दामोदरः । रूपाल्पकेऽर्द्धितो

हारस्ततो रूपाद्विशोधयेदिति । हरखण्डेन संयुक्तो गुणकः स गुणोऽथ वेति च । आदिशर्मणा त्वंशातहानिकर्मणा लग्ने शुभेऽनिते हारगुणौ द्विनिघ्नाविति वदता हरोनरूपं द्विगुणं गुणो भवतीति स्वीकृतं तदसत् । लग्नराश्यादिसमे पापे सौम्ये वान्तराभावाद्वान्यभाव इति हालि-कोऽपि प्रतिपद्यते । तत्र पापस्य हरः शून्यमिति रूपं गुणस्तेन दायांशानां गुणके दायांशा एव भवन्तीति न कापि हानिः । शुभस्य हरो द्विनिघ्न इति रूपद्वयं गुणस्तेन दायांशगुणने द्वैगुण्यं भवतीति यत्किंचिदेतत् । हानिगुणकेन गुणने हानिरेव भवितुमर्हति न वृद्धिरिति बालोऽपि जानाति । एवमन्यत्रापि व्यभिचरतीति परिहार्योऽयं पन्थाः । यदप्या-युष्मता सगोनलग्नषड्भाल्पं कुहृतं हरो भवतीति उक्तं तदप्यसत् ॥ तत्र राशयोऽधो द्विघ्नलवादिना युक्ता हरो भवतीति ध्येयम् । यदपि गणेशनाम्ना द्विघ्नहरोनं रूपं गुणः स्यादित्यभिहितं तदपि तुच्छम् । कदाचित् द्विघ्नहरस्य रूपादप्याधिक्यलाभेन रूपाच्छुद्ध्यसंभवात् । रूप-मेव तस्माच्छोद्ध्यमिति यदि तथापि व्यभिचरतीति धूलीकर्मणा प्रदर्शनीयम् । यत्तु भाववशादादिशर्मणा चक्रार्द्धहानिः स्वीकृता तदसदिति प्राचोक्तं तदप्यसङ्गतम् । तद्ग्रन्थे तेन तथानङ्गीकारात् । सूर्येण क्षीणचन्द्रोऽत्र पाप इत्युक्तं तदपि पद्धतिकारविरोधादयुक्तम् ॥

अथांशायुर्दायसाधनमाह ॥

दायांशोत्थकलाः स्वयोग्यगुणकघ्नाः खाभ्रनेत्रोद्धृता
ह्यंशायुर्द्युसदां समादि तु तनोर्दायांशकास्त्वाहताः ।
दिग्भक्ताश्च समादि चेत्तु बलवल्लग्नं तदा लग्नभे-
तुल्याब्दैस्सहितं द्विनिघ्नशरहृद्भागादितो मासयुक् ॥ २० ॥

यथाप्राप्तचक्रार्द्धहानिसंस्कृतदायांशानां कलाः स्वकीयकर्मयो-ग्यगुणकेन गुणिता द्विशत्या भक्ताः फलमंशायुर्वर्षाद्यं भवति । अय-मभिसन्धिः । दायांशकला द्विशत्या भक्ता लब्धं वर्षाणि स्युः । शेषं

LIBRARY

सविकलं द्वादशभिः संगुण्य विकलास्थानात्षष्ट्याप्तं कलासु संयोज्य द्विशत्या भक्ते मासाः । पुनः शेषं सावयवत्रिंशता गुणयित्वा विकलातः षष्टिलब्धमुपरि प्रक्षिप्य शतद्वयेन भागे गृहीते दिनानि स्युः । पुनः शेषं षष्ट्या निहत्याधःस्थाङ्कयुतं द्विशत्या भवेल्लब्धं घटिका भवेयुरेवमग्रेऽपि लग्नस्य दायांशास्त्रिगुणाः प्रोक्तरीत्या दशभिर्भाज्या वर्षाद्यं लग्नायुर्भवेत् । यदि तु षड्बलाधिकबलं लग्नं तदा लग्नराशितुल्यवर्षैर्युक्तं कार्यम् । लग्नभागादेर्द्विगुणात्पञ्चभिराप्तेन मासादिफलेन मासादौ च युक्तं कार्यं तल्लग्नायुः स्पष्टं भवति । यदा लग्नबलं षड्बलाल्पं तदार्कांशा दायांशास्त्रिगुणा दशभक्ता एव लग्नायुः स्यादिति तात्पर्यार्थः । बललक्षणं चाल्पे हीनबलौ बली षडधिक इत्यग्रे वक्ष्यते । यद्वायुःसाधनवासना यद्येकभगणकलाभिर्द्विशतमिताभि २०० रेकं वर्षं तदेष्टदायांशकलाभिः किमित्यनुपातेन सुगमा । दशभिरंशैस्त्रयो नवांशास्तत्तुल्यान्येव वर्षाणीति त्रीणि वर्षाणि भवन्ति । अथानुपातः । यदि दशभिरंशैस्त्रीणि वर्षाणि तदेष्टलग्नदायांशैः कानीत्यत उक्तं तनोर्दायांशकास्त्र्याहता दिग्भक्ता इति सौर्यान्विता राशिसमं च होरेति बृहज्जातकोक्तेर्लग्नभैस्तुल्याब्दैः सहितमित्युपपन्नम् । ततोऽनुपातः । यदि त्रिंशदंशैर्द्वादशमासास्तदेष्टलग्नभागैः किमिति । अत्र गुणहरौ षड्भिरपवर्त्य लब्धं गुणे द्वौ २ हरे पञ्च ५ अतो द्विनिघ्नशरहृदित्याद्युपपन्नम् ॥

अथ पिण्डनिसर्गजीवशर्मायुर्दायोपयोगिभूतान् दायांशान् साधयति ॥

> स्वोच्चोनोऽद्युचरोऽङ्गभात्समधिको भाद्योऽस्त्यकोनार्कभं १२
> तद्भागा द्युचरोऽरिभे यदि गुणांशोना विना वक्रगम् ।
> शाप्ता अस्तमिते विना शनिसितौ पानिद्वयेनाधिकैः-
> कार्याः पिण्डनिसर्गजीवशदिने चक्रार्धदानिर्भवेत् ॥ २१ ॥

स्वोच्चेनोनो ग्रहो यदि षड्भागिभ्योऽधिकस्तदास्य भागाः

कार्याः । यदि षड्भाल्पस्तदा तं द्वादशभ्यो विशोध्य भागाः कार्याः । वक्रगं नीचासन्नभावेन वक्रगतिं प्राप्तं ग्रहं भौमादिपञ्चकान्यतमं विहाय यद्यरिभे स्वाभाविकशत्रुराशौ ग्रहः स्यात्तर्हि ते तदीया भागा निजचतुर्थांशेन हीनाः कार्याः, वक्री ग्रहः शत्रुराशावपि त्र्यंशं नापहरतीत्यर्थः । अत्र केचिट्टिप्पणकारा आरो वक्रः क्रूरदृक्चावनेय इत्यभिधानाद्धित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभाग इति वराहोक्तौ वक्रशब्देन भौमं व्याख्याय तत्स्वरसाद्वक्रगमित्यत्रापि भौमं व्याचक्षते तद्बहूनाम संमतत्वादुपेक्ष्यम् । ज्ञानराजसुतसूर्योपि । आरो वक्रो वक्रचारो महीज इति भौमनामानि स्वेच्छया प्रकल्प्य वक्रचारग इति श्रीपत्युक्तौ वक्रचारगो भौम इति व्याख्यातवान् । तदपि स्वच्छन्दं प्रवर्तमानस्यैकदेशिनो मतमुपेक्ष्यमेव । बृहज्जातकटीकायां हित्वा वक्रमित्यस्य व्याख्यावसरे भट्टोत्पलेनाप्युक्तम् । वक्रं विपरीतगतिं हित्वा वर्जयित्वा यो ग्रहो रिपुगृहगतः शत्रुक्षेत्रगतो भवति तेन स्वादायुषस्त्रिभागो हीयते । एतद्बहूनां मतम् । आचार्यस्य पुनरेष एव पक्षोभिमतः । अन्यथा हित्वा भौममित्याचक्षेत । अत एव ज्ञायते यथा वक्रगो ग्रह आयुर्दायं सबलत्वात्त्रिगुणं ददाति तथापि नापहरतीति निश्चय इति कथं पुनर्वक्रिणं विहायेति पक्षस्य बहुसंमतत्वमिति चेत् । पश्य । श्रीधरः ॥ वक्रचारं विना त्र्यंशं शत्रुराशौ हरेद्ग्रह इति । श्रीपतिरपि । त्र्यंशकं हरति शत्रुभे ग्रहः स्वायुषोत्र न तु वक्रचारगः ॥ दामोदरोपि विना वक्रगतिं हरेच्च । निजायुषस्त्र्यंशमरेर्गृह इति । होरामकरन्दे । त्र्यंशं हरन्त्यकुटिला रिपुराशिसंस्था इति । बृहज्जातकेपि । हित्वा वक्रमित्यत्र वक्रमस्यास्तीति वक्रः अर्शआदिभ्योऽच् वक्रिणं हित्वेति व्याख्येयम् । प्रामाणिकैः श्रीधरादिभिराचार्यगर्गपराशरबादरायणदेवलादिपद्धतयस्तज्जातकानि च संपूर्णानि दृष्ट्वान्यासन्नतस्तैर्यदुक्तं तत्सर्वं समूलमेव । । यत्तु बृहज्जातकटीकायां न चावनिसुतस्त्र्यंशं शत्रुवेश्मगतस्तथेति गर्गवाक्यं यदपि च भूम्याः पुत्रं वर्जयित्वारिभस्था

ह्रन्यः स्यात्स्वाद्दायुपस्तौ विभागमिति बादरायणवाक्यं तदुभयमप्यंशा-
यु:प्रकरणे ऽभिहितत्वादंशायुर्विषयमेवेति बोद्धव्यम् । पराशरेण शत्रुक्षे-
त्रगतस्त्र्यंशमिति वदता भौमं विहायेति नोपात्तम् । तथा लघुजातक-
सारावल्यादावपि नोक्तमेवं मतभेदे पराशरमतमेव बहुसंमतत्वादंशा-
युष्यादृतमाचार्यैरित्यपि ध्येयम् । अस्तम् इते प्राप्ते ग्रहे ते दायां-
शाद्विभक्ताः कार्याः । शनिशुक्रावस्तंगतावप्यर्द्धं नापहरतः ।
अत्र त्र्यंशार्द्धहानिद्वये प्राप्तेऽधिकार्द्धहानिरेवकार्या न हानिद्वयम् ।
अनेन हानिद्वयेऽपि त्रितयं विधेयमित्यधुनातनोक्तं परास्तम् । गर्गः ।
ध्रुवाय हानिः कर्तव्या ततोन्यासु बह्वप्वपि । प्राप्तास्वेकैव
कर्तव्या या स्यातासु महत्तरा । यवनः । खेचरो जायते
योर्द्धं त्र्यंशयोरपहारकः । आयुषः स हरेदर्द्धं त्र्यंशं शुक्रशनैश्चरौ । ननु
ध्रुवाय हानिःकर्तव्येत्यादिगर्गवाक्यस्यांशायुःप्रकरणे पठितत्वादनेनां-
शायुष्येव सकृद्धानिरुक्ता न पिण्डायुषि । किं च निष्कृष्टार्थप्रतिपाद-
कैर्वराहश्रीधरश्रीपत्यादिभिराचार्यैः पिण्डायुर्दायेषु सकृद्धानिर्नाभि-
हिता । तस्माद्धेतोर्हानिद्वये प्राप्तेऽधिकैका हानिः स्यादिति यदुक्तं तद-
युक्तम् । न चाचार्यमतं तु बहुघ्नतायमेकं तु यद्भूरि तदेव कार्यमित्यस्य
व्याख्यावसरे शत्रुक्षेत्रस्थो नीचस्थश्च यदा ग्रहो भवत्यस्तंगतो वा
तदासकृदेवायहानिः कार्या नीचेतोऽर्द्धं ह्रसतीत्यत्राप्यनुवर्तनीयमि-
ति भट्टोत्पलोक्तेः सकृद्ग्रहणनियमनोपपत्त्येन सकृद्धानिरपि स्वीक्रिय-
तामिति वाच्यम् । तथासति नीचस्थे ग्रहे शत्रुक्षेत्रगतेऽस्तमिते वा
सकृदर्द्धहानिरेव स्यान्न त्र्यंशहानिर्नापि द्वितीयार्द्धहानिरिति प्रसज्येत ।
तत्र यथा भवद्भिर्दोषावधारणेनैव नीचस्थत्वनिबन्धनामर्द्धहानिं
विधाय पश्चाच्छत्रुगृहस्थे त्र्यंशहानिस्ततोऽर्द्धहानिर्वा क्रियते
तद्वदिहापि त्र्यंशार्द्धहानिद्वितये प्राप्ते विनिगमनाविरहाद्धानिद्वितय-
मपि स्यादिति सुन्दरोक्त एव पन्था नितान्तसुन्दर इति प्रतिभाति ॥
अत्र वयं तु ब्रूमः । खेचरो जायते इत्यादियवनमुनिवाक्ये

विशिष्य त्र्यंशहान्यस्तंगतत्वनिबन्धनार्द्धहान्योर्निर्णयस्योक्तत्वान्हा-
निद्वये प्राप्तेऽधिकार्द्धहानिरेव स्यान्न हानिद्वयम् । नीचस्थत्वनिबन्ध-
नार्द्धहानौ प्राप्तायां तथारिभस्थितत्ववशात्सूर्यलिप्तकिरणत्वाद्वा पर-
हानौ च प्राप्तायां सकृद्धानिनिश्चायकवचनाभावाद्धानिद्वये न कि-
चिद्बाधकम् । अतो हानिद्वयेऽप्यधिकैकेति सर्वमवदातम् । येषरो
जायत इत्यपि वचनमंशायुर्विषयकमिति प्राहुः । तन्न चतुरस्र प्रमा-
णाभावात् । केशवतः परमप्राचीनेन भट्टोत्पलेन नेदं यवनवचनं
दृष्टमतः केशवदृष्टमिदं वचनं यत्कालप्राचीनयवनस्य न भवतीत्य-
प्याहुः । तदयुक्तम् । भट्टोत्पलेन पराशरजातकं न दृष्टमस्माभिस्तु
किं चित्पराशरजातकं दृश्यते तच्च भट्टोत्पलादृष्टत्वादिदं पराशरीय-
जातकमेव न भवतीति वक्तुमशक्यम् । तस्मात्प्रामाणिकैः श्रीकेशव-
सांवत्सरैर्दृष्टं यवनवचनं भवत्येव ॥ अथेति ॥ अथो इत्यानन्तर्ये ।
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः ॥ चक्रार्द्धहानिर्भवेत् ।
पूर्वानीतस्वकीयचक्रार्द्धहानिगुणेन दायाशा गुणनीया इत्यर्थः ॥ अथा-
द्दिन उपपत्तिः ॥ बृहज्जातके । मययवनमणित्थशक्तिपूर्वैर्दिवसकरा-
दिषु वत्सराः प्रदिष्टाः ॥ नवतिथिविषयाश्विभूतरुद्रा दशसहिता
दशभिः स्वतुङ्गभेषु ॥ १ ॥ नीचेतोऽर्द्धं ह्रसति हि ततश्चान्तरस्थेऽनु-
पात इति । उच्चे पठितमायुर्नीचे पठितमर्द्धमायुस्तस्मान्नीचादर्वा-
र्वागपि षड्राशिभिः पठितवर्षार्द्धस्योपचयो भवतीति नीचादविमा
अर्वाचीनाश्च राशयः पठितवर्षार्द्धगुणाः षड्भक्ता अथ वा पठितवर्ष-
गुणा द्वादशभक्ताः फलं पठितवर्षार्द्धे योज्यं पिण्डायुः स्यात् । तत्र
स्वोच्चोने षड्धिके चक्रं संशोध्य शेषं नीचादविमराश्यादि तत्पठित-
वर्षगुणं द्वादशभक्तं फलं पठितवर्षगुणितषड्भस्य द्वादशभा-
गात्मकं पठितवर्षार्द्धं योज्यमिति नीचादविमराश्यादौ प्रागेव
षड्राशियोगादयथास्थितं स्वोच्चोनग्रहं षड्धिकं गृहीत्वायुःसाधने
न कोपि विशेष इति प्राचेऽपि भाभाति । अतः स्वोच्चोनो ग्रहरा-

भात्समधिको ग्राह्य इत्युपपन्नम् । षड्भान्ये तु स्वोच्चोने तं षड्भाद्वि-
शोध्य शेषं नीचादर्वाचीनराश्यादि प्राग्वदिहापि प्रागेव षड्भयोगात्ष-
ड्भाल्पं द्वादशराशिभ्यो विशोध्य ग्राह्यमित्यपि युक्तम् । अस्य स्वोच्चो-
नषड्भाधिकग्रहस्य राश्यादिपठितवर्षगणं द्वादशभक्तं कार्यं तत्राचार्यै-
र्यांशा एव कृता अतस्तद्भागाः पठितवर्षगुणा भगणांशैर्भाज्या इत्युपपन्नम्।
अत एव वक्ष्यते । दायांशाः स्वगुणैर्हता हि भगणांशा ३६० प्त्या
समादि पिण्डायुरिति । त्र्यंशार्द्धहानिवासना होरागमसूनैव । अंशायुषि
वक्रगतिग्रहस्य सबलत्वेनायुषस्त्रिगुणितत्वादिहापि सबलत्वान्न त्र्यंश-
हानिस्सूचिता । अतो विना वक्रगमिति साधु । सूर्येण युक्तास्तमित-
योरपि शनिशुक्रयोर्वैराभिनिवेशेन नैवायुर्हानिरित्यपि सूक्तम् । पूर्वोक्तं
चिन्तयेत्सर्वमिति सारावल्यामुक्तत्वाच्चक्रार्द्धहानिः कार्येत्यपि सूक्-
तम् । अर्यारिभ इति सामान्यतो निर्देशात्स्वाभाविकशत्रुरेव ग्राह्यो
न तात्कालिकशत्रुः । यतस्तयामति कदाचिदधिशत्रुरपि संभवति ।
तद्भागानपि प्राग्वद्धानिविशेषेण भाव्यं । हानिस्तु नाभिहितातो यद्व्या-
ख्यातं स्वाभाविकशत्रुभ इति तत्सर्वं समीचीनमेव । न चाधिश-
त्रुरपि शत्रुर्भवत्येवेति तद्भेऽपि त्र्यंशहानिरिति वाच्यम् । अप्रयोजक-
त्वाद्बहूनामसमतत्वाच्च ॥

अथ लग्ने क्रूरे हानिमाह ॥

दायांशा द्युसदां पृथक्तनुलवादिघ्नाः खषट्च्युद्धृता
आप्योनास्तनुगे खले च यदि सद्दृष्टेर्द्धयाथापरे ।
निघ्न्यश्चोदयभावजेन तनुगौ चेद्बलिनस्य तत्साम्ये
पुष्टफलेन नेति तनुपेऽस्मिन्नांशजेऽसौ क्रिया ॥ २२ ॥

द्युसदां ग्रहाणां दायांशा अनन्तरानीता यथाप्राप्तचक्रार्द्धहानि-
गुणितास्ते पृथक् स्थाप्याः । तनोर्लग्नस्य राशीनग्रहांशादिना गुण्याः
षष्ट्यधिकशतत्रयेण भाज्याः आप्या लब्धेनांशादिना पृथक्स्था हीनाः

कार्याः । तनुगे लग्नगे खले क्रूरग्रहे सति । अत्र क्रूराः सूर्यभौमशनय एव । यत आह बादरायणः । सूर्याङ्गारशनीनामेकस्मिँल्लग्ने भवति हानिः । विधिनात्वनेन सौम्येक्षिते दलं पातयेल्लब्ध्यात् ॥ लब्ध्याद्दलं लब्धस्यार्द्धं पातयेदित्यर्थः । आयुः पिण्डादिति शेषः । यदा शुभः क्रूरश्च द्वावेतौ लग्ने भवतस्तदापि क्रूराक्रान्तत्वनिबन्धना हानिः स्यादेव । यदाह पराशरः । तिष्ठतः शुभपापौ चेत्पापोदयविधिः स्मृत इति । एतदर्थलाभार्थमेव चशब्दोपादानमपीति बोध्यम् । यदि लग्नस्थखलः सता शुभग्रहेण दृष्टस्तर्हि अर्द्धया आप्या ऊनाः कार्याः । अत्र शुभाश्चन्द्रबुधगुरुशुक्राः । अथापर इति । अथशब्दो मतान्तरसूचनार्थः । ग्रहाणां दायांशा उपोदयभावजेन निघ्न्या आप्या ऊनाः कार्याः । उदयो लग्नं तदुदयभावात्तनुभावात् ज्ञायते तदुदयभावजमर्थात्फलमुपस्योदयभावज तेन लग्नवर्तिक्रूरस्य लग्नोत्पन्नारोहावरोहफलेनाभिगुणनीयेत्यर्थः । सौम्यदृष्टे तु लग्नगे क्रूरे उपोदयभावजेन निघ्न्यार्द्धेन आप्योनाः कार्याः । ननु यदि द्वित्राः पापग्रहा लग्ने स्युस्तदा कस्य भावफलेन गुणनीयेत्यत आह । तनुगोपौ चेद्बलिष्ठस्येति । षड्वंशमात्रबलेनाप्यधिकबलशालिन इत्यर्थः तनौ लग्ने गच्छतस्तौ तथा तौ च तावुपौ च तनुगोपौ ॥ अत्र द्वित्वं वित्वोपलक्षकं । बलसाम्ये विनिगमकाभावाद्द्यादिफलप्राप्तं गुणनं निषेधति तत्साम्ये पुष्टफलेनेत्यनेन । तत्साम्ये पुष्टफलेनाधिकारोहावरोहफलेन, बलकनसाम्येतु द्व्यादिफलगुणनमर्थात्सिद्धम् । अपरे शालिग्रामकृष्णादय इति वदन्तीत्यध्याहारः । एवमेकदेशिमतमनूद्यदूषयति । नेतीति । इति उक्तं यत्परमतं तन्न रमणीयमित्यर्थः । लग्नगे क्रूरे लग्नेशे इयं हानिः कार्या न वेत्याकाङ्क्षायामाह ॥ तनुपेऽस्मिन्निति । अस्मिन् लग्नगे क्रूरे तनुपे लग्नेशे सति असौ हानिरूपा क्रिया कार्या । अन्यं विशेषमाह ॥ नांशजेऽसौ क्रियेति । स्पष्टम् । असौ क्रियेति काकाक्षिगोलकन्यायेनोभयत्र संबध्यते ।

यद्वा। नेति तनुपेस्मिन्नित्यत्र, अस्मिन् लग्नगे क्रूरे तनुपे सति असौ हानिर्न कार्येत्यपरे वदन्तीति व्याख्येयम् । अत्रोपपत्तिः । बृहज्जातके । सार्द्धोदितोदितनवांशहतात्समस्ताद्भागोष्टयुक्तशतसंख्य उपैति नाशम् । क्रूरे विलग्नसहिते विधिना त्वनेन सौम्येक्षिते दलमतः प्रलयं प्रयाति ॥ अर्द्धशब्दः खण्डवाचकस्ततोऽर्द्धेन खण्डेनोदितोऽर्द्धोदितस्तेन सह वर्तमानाः सार्द्धोदिताः सावयवा इत्यर्थः । सार्द्धोदिता उदिताश्च ते नवांशाश्च तैर्हतात् । अत्र लग्ननवांशेतिन्युक्तोदितनवांशेत्युपादानं लग्नस्य राशीन्विहाय शेषभागानां कलाः शतद्वयेन भाज्या लब्धं सावयवनवांशा इत्येतदर्थम् । उत्पलस्तु. लग्नं राश्यादिकं लिप्तापिण्डीकृत्य शतद्वयेन भागमपहृत्यावाप्तं भचक्रस्य तावन्तो नवांशा उदिताः ; यश्चार्द्धोदितनवांशः स तत्रोदितनवांशसमूहे योज्यः एवं कृते सार्द्धोदितोदितनवांशसमूहो भवतीति व्याचख्यौ । तन्न श्रद्धेयम् ।-यस्माद्बादरायणः । लग्नांशलिप्तिकाभिर्हत्वायुर्भजेच्च क्रलिप्ताभिः । कल्याणवर्मा । लग्नांशलिप्तिका इत्येत्यादि । श्रीधरः । लिप्तीकृतैर्लग्नभागैर्दायान्हन्यादिति । गुणाकरोपि । लग्नस्थे खलखेचरे तनुलवा व्योमेक्षसामिति । दामोदरः । क्रूराय हानिश्च ततोत्र राशीन्विहाय लग्नस्य लवादिकेनेति । आदित्यशर्मा पृथक्स्थं खेटायुस्तनुलवहृतमिति । विश्वनाथोपि । तनुगखले खेटदायाः पृथक्तन्वंशादिघ्ना इत्यादि । अत्र सर्वत्रांशपर्यायपदपर्यन्तधावनस्य लग्नराशीन्विहायांशा ग्राह्या इत्यत्रैव तात्पर्यम् । अन्यथा लग्नलिप्तिकाभिर्हत्वेत्याद्युक्तं स्यात् । अत एव तेनोक्तमन्ये त्वेवं व्याचख्युत इत्यादिनैतदपि समूलमित्यन्तेन । यत्तु । कुम्भलग्नस्याद्यांशक उदये आदित्यचन्द्रशुक्राः परमोच्चे बुधजीवशनैश्चराः परमनीचे भौमश्च कुम्भेष्टाविंशतिभाग इत्यस्मिन्नुदाहरणे लग्नस्य भुक्तनवांशशून्यत्वेन पापग्रहभौमसंबन्धनिबन्धनहान्यभावेपि यदृच्छया हानिं ग्रहायुर्दायेषु कृत्वा सार्द्धपञ्चदशवर्षतुल्यमप्राप्य ऊर्ध्वं विंशतेरधस्ताद्द्वायुरानीय च विंशतेर-

धस्तादायुर्न स्यादिति वराहोक्तमयुक्तमित्युक्तं तदयुक्तमिति बोध्यम् । चक्रस्योदितनवांशा ग्राह्या इत्यस्मिन्पक्षेऽपि लग्नस्य दश राशय इति नवतिनवांशा भुक्तास्तस्मादेकनवतिनवांशा भुक्ता इत्युक्तं तदप्यसंगतम् । लग्नगतनवमांशस्य भुक्तत्वात् । तस्मान्नायुर्विंशतेः स्यादधस्तादिति युक्तमुक्तं वराहमिहिराचार्यैः । यद्वा । विंशतेरधस्तादायुरुदाहरणान्तरे भवतु नास्माकमत्राग्रहस्तथापि भट्टोत्पलप्रदर्शितविंशत्यल्पायुर्दायोदाहरणमसदेवेति ब्रूमः । किं च । वक्रितः पुनः शत्रुक्षेत्रगतोऽपि नापहरति । एतद्बहूनां मतमिति पूर्वमुक्तं पश्चादङ्गारकस्य शत्रुक्षेत्रगतस्यापि न पततीत्यभिहितमतः पूर्वापरग्रन्थविरोधोऽपि दूषणम् । यदपि चोक्तम् । 'परमोच्चगतानां परमनीचगतानां च शत्रुक्षेत्रस्थत्वात्त्र्यंशोऽस्तंगतानामर्द्धं च न पात्यते । यतो निमिषपरमांशके विलग्न इत्यत्र वृषस्थस्य चन्द्रस्य शत्रुक्षेत्रस्थत्वेन त्र्यंशहानौ कृतायां परमायुर्न प्राप्नोतीति । तदपि मन्दम् । यवनमतेन शुक्रस्य चन्द्रशत्रुत्वेऽपि सत्यादिमतेन स्वाभाविकतत्कालमित्रामित्रप्रकाराभ्यां सममित्रत्वोपलम्भेन त्र्यंशहानेरप्राप्तत्वेन तन्निषेधस्यान्याय्यत्वात् । किं च तत्कालजशत्रुगेहे त्र्यंशहानिरित्यादिमते शुक्रस्य यवनप्रकारेण चन्द्रस्वाभाविकशत्रुत्वेन तत्कालमित्रत्वेन च समत्वात्त्र्यंशहानिकथनमयुक्तम् । ननु सत्ययवनमतयोर्विरोधे किं न्यायः । उच्यते । बहुसंमतत्वात्सत्याचार्यमतमेव प्रमाणमिति । प्रथमादि भट्टोत्पलेनासङ्गतमुक्तमित्यास्तां तावत् । प्रकृतमनुसरामः । लग्नप्रान्ते ग्रहायुर्द्वादशांशतुल्या परमाहानिर्लग्नादौ तु हान्यभावस्तत्र नवांशानामपि परमत्वाभावाद्यतो नवांशेभ्यः साधनमुचितं हान्याः । तत्र नवांशानयनार्थमनुपातः । यदि कलानां द्विशत्या २०० एकोनवमांशस्तदेष्टविराशिलग्नकलाभिः किमिति । अन्योऽप्यनुपातः । यदि नवभिर्नवमांशैरायुर्द्वादशांशतुल्योपचयस्तदेष्टनवांशैः किमिति । अनन्तरोद्दारितवैराशिके द्वादशनवघातं हरं १०८ कृत्वाष्टयुक्तयतसंख्या

भागो हीयत इति सम्यगुक्तमत्र भवद्भिर्वराहमिहिराचार्यैः । एनमपि हरं १०८ द्विशत्या संगुण्य निष्पन्नचक्रकलातुल्यहरेणा २१६०० युर्दायं लग्नांशकलाहतं भजेदिति बादरायणकल्याणवर्मश्रीपत्यादिभिरपि युक्तमुक्तम् । श्रीकेशवसांवत्सरैस्तु लग्नस्य कलास्थानेंशा गृहीतास्तथा चक्रकलास्थाने चक्रांशा गृहीता अतो यदुक्तं तत्सम्यगेव । श्रीपत्यादिभिर्दायांशजनितवर्षाद्यायुष एव ह्रासोभिहितोऽत्र तु तद्धेतोरितिन्यायेन दायांशानामेव ह्रासो विहित इति युक्तमुत्पश्यामः । अयं ह्रासो दायांशेभ्यो विशोध्योऽत आयोना इति साधु । सद्दृष्टेर्दृष्टयेत्यत्रागम एव प्रमाणम् । अथ परमतत्रासनोच्यते ॥ उग्रग्रहस्य लग्नभावफले संपूर्णे प्रोक्तहानितुल्या हानिर्भावफलाभावे हान्यभावः । अन्तरा त्रैराशिकेन हानिसाधनं न्याय्यं तत्रेदं त्रैराशिकम् । रूपमितेन संपूर्णेन क्रूरलग्नभावफलेन प्रोक्ता हानिर्लभ्यते तदेष्टेन किमित्युग्रोदयभावजेन निघ्न्यात्प्रोत्युपपन्नम् । अत एवोक्तं रत्नावल्याम् । संस्कार एवमुदितो ग्रहजीवितांशसंशोधने परमभावफलानुसारम् । ऊनाल्पके सति च भावफलेनुपाताद्ग्राह्यो बुधैर्विधिरसाविह युक्तियुक्तः ॥ १ ॥ नेदं युक्तं मन्यामहे । गर्गपराशरबादरायणाद्यनुक्तत्वाद्वराहाद्याचार्यानुक्तत्वाच्च । किं च यद्येवं युक्तिबलात्स्वीक्रियेत तदा लग्नगक्रूरं प्रति शुभस्य संपूर्णदृष्टौ भावफलगुणितलब्धेर्दलं शोध्यं द्वयोः न्यूनदृष्टौ तद्दृष्टिगुणितं भावफललब्धलब्धेर्दलं शोध्यं शुभयोर्दृष्टौ बलवद्ग्रहदृग्गुणितं तद्दलं शोध्यं बलसाम्येधिकदृष्टिगुणं तद्दलं हेयमित्याद्यतिप्रसङ्गो भूयानापद्येत । तस्माद्यत्किंचिदिति ॥ अथ योयो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यातस्यतस्याभिवृद्धिरिति स्वामियोगस्य शुभत्वाभिधायकत्वात्स न हानिकरो भवतीति लग्नगे क्रूरे लग्नेशेप्यसौ हानिः कार्येति यत् व्याख्यानं तन्न विचारपदवीमारोढुमर्हतीति । अत्राहुः योयो भाव इति वाक्ये मित्रविषयके

सत्यपि यदि हानिर्न स्वीक्रियते तदा सिंहराशिपतावपि रवौ सिंहस्थे वराहाद्युक्तं निशान्धत्वं दत्तजलाञ्जलि स्यात् । तत्र यथा सिंहसंस्थे निशान्ध इतिवाक्येन निशान्धत्वं दुष्परिहरं तद्वदिहापि लग्नगे क्रूरे लग्नपतावपि वाक्यादियं हानिर्दुष्परिहरैव किं चैवं युक्तिसंचारे क्रूरे सौम्ये च ग्रहे लग्नस्थे साम्याद्वेषा हानिर्न स्यात् । अपि च लग्नस्थे क्रूरे शुभदृष्टे पापदृष्टे च शुभाशुभत्वसाम्यात्संपूर्णैव हानिः स्यान्न तदर्धं हानिरित्यादिको भूयानतिप्रसङ्गः प्रसज्येतेति ॥ वस्तुतस्तु लग्ने क्रूरे यद्येषा लग्नायुष्येव हानिरुक्ता स्यात्तदा तस्मिंल्लग्नेशे योयो भाव इति वाक्यबलाद्धान्यभावोपि स्यात् । बृहज्जातके सार्द्धोदितोदितनवांशहतेत्यादिवाक्यस्य ग्रहायुर्हानिप्रकरणे पठितत्वात्सारावल्यां विहगायुषेति व्यक्तमुक्तत्वाच्छ्रीधरेणापि लब्धं वर्षादिकं शोध्यं ग्रहाणां तन्निजायुषीत्युक्तत्वाच्च, ग्रहायुष्येवायं ह्रासो न लग्नयुषीति लग्नगे क्रूरे लग्नपतावपि ग्रहायुर्हानिक्रमे न किं चिद्बाधकमिति स्वामियोगस्य शुभत्वादिभिः परैरप्यवश्यमास्थेयम् । पराशरहोरायामपि हानिः कार्यंत्येवोक्तमतो यदुक्तमाचार्येण तनुपेस्मिन्नसौ क्रियेति तदार्षशास्त्रसंमतं युक्तियुक्तं च । अत एव सुन्दरमिश्रैरप्येवमेवोक्तम् । क्रूरे तदीशेपि मतैव हानिरिति । यत्त्वाचार्यटिप्पण्यामन्यादृशव्याख्यानं तल्लेखकदोषात्पतितमित्यादिगतिश्चिन्त्या । क्रूरोदये योपचयः स नावांशायुषीत्युक्तत्वान्नांशभेसौ क्रियेति सर्वमवदातम् । यत्तु श्रीपतिपद्धतिटीकायामंशायुर्दायस्तु लग्नबलाधिकत्वादेवोत्पद्यते तत्र क्रूरयोगाद्धानिर्युक्तैवेति वामनो वदता मूर्येवांशायुष्येषा हानिरिति स्वीकृतं तदनेन परास्तम् । यदपि च वामनानभिज्ञतया वक्रकलाभिरायुर्दायो लभ्यते तदा लग्नकलाभिः किमित्यभिधायि तदप्यसदेवेति बोध्यम् ।

एवं दायांशानभिधायाधुना पिण्डनिसर्गजीवशर्मायुर्दायानयनमाह ॥

गोऽङ्गास्तत्त्वतिथिप्रभाकरतिथिस्वर्गा नखाः पैण्डजे
नैसर्गे नखभूद्विगोधृतिनखाः पञ्चाशदर्कान्गुणाः ।
दायांशाः स्वगुणैर्हता द्वि भगणांशाप्त्या समाद्यायुषी
स्वर्गाप्ताश्च समादिजैवमिभहृत्स्वांशैर्घटीद्यन्वितम् ॥ २३ ॥

अर्कादिति ल्यब्लोपे पञ्चमी । अर्कमारभ्येत्यर्थः ॥ अत्र समादि पूर्वोक्तरीत्या ग्राह्यम् । शेषं स्पष्टम् । स्वर्गाप्ता इति । सर्वेषां ग्रहाणां दायांशा एकत्रिंशत्या भक्ता लब्धं वर्षादि जीवशर्माचार्यमते आयुःस्यात् ॥ तद्घट्यादि दायांशेभ्योऽष्टभक्तेभ्यो लब्धघटीमुखेन युक्तं कार्यमित्यर्थः । पिण्डायुर्वर्षादिसाधनोपपत्तिः प्रागुक्ता । नैसर्गिकेऽपि दायांशवर्षाद्यानयनयुक्तिः सैव । एवमेव प्रकृतेऽप्ये जीवशर्मोक्तचन्द्रजे इति सारावल्यामुक्तेश्चक्रार्द्धहान्यादिकमत्रापि कार्यमित्युपपन्नम् । अथ जैवे युक्तिः । जीवशर्मा । सप्तदशैका द्वियमा वसवो वेदाग्नयो ग्रहेन्द्राणाम् । वर्षाण्युच्चस्थानां नीचस्थानामतोऽर्द्धं च । मध्येत्वनुपातात्स्यादानयनं शेषमत्र यत्किंचित् । पिण्डायुष एव कार्यं तत्सर्वं गणिततन्त्रज्ञैरिति ॥ अतस्त एव हानिसंस्कृता दायांशा अत्रापि ग्राह्या इत्युपपन्नम् । उच्चस्थे गुरौ दायांशा भगणांशमितास्तत्रायुःपरमं परमायुरंशतुल्यं परमायुस्तु सपञ्चदिनं विंशत्यधिकवर्षशतम् । १२० । ० । ५ । ० । ० अत्र पञ्चदिनानि त्यक्त्वा शेषमायुः १२० परमायुष्ट्वेन तावद्गृहीतम् । अतोऽनुपातः ॥ यदि भगणांशमितैर्दायांशैः ३६० परमायुःसममांश $\frac{१२०}{१}$ तुल्यमायुस्तदेष्टैः किमिति । अत्र हरघातो हरः २५२० गुणः १२० एतौ गुणेनापवर्त्य प्राप्त एकविंशतिर्हरे २१ अतो दायांशाः स्वर्गाप्ता वर्षादि जैवमायुरित्युपपन्नम् ॥ अथ पञ्चदिनेभ्य आयुःसाधनार्थमन्योऽनुपातः । यदि भगणांशैः ३६० पञ्चसममांशा $\frac{५}{१}$ आयुस्तदेष्टैः किं लब्धं दिनादि भवति । तत्र घट्यादिफलानयनार्थमन्योऽपि षष्टिर्गुणः ६० ॥ प्रथमत्र गुणघातो

गुणः ३०० हरघातो हरः २५२० गुणहरौ गुणेनापवर्त्य हरे किं चिदधिका अष्टौ लभ्यन्ते तत्र स्वल्पान्तरत्वादष्टैवोपात्तास्तेनेभहृदित्याद्युपपन्नम्, अत्रैव गुणहरौ पष्ट्यापवर्त्य लवतः यरघ्ना द्विवेदभागाष्टभिराद्यमिति मिश्रैरपि सुष्ठूक्तम् । अथ प्रसङ्गात् श्रीपतिकृतप्रकारवासनोच्यते । तत्र परमायुर्वर्षाणि १२० सप्त पञ्चदिनान्येकत्रपंद्विसप्तत्यंशात्मिकानि $\frac{१}{७२}$ समच्छेदविधिना संयोज्य जातं परमायुः । $\frac{८६४१}{७२}$ अस्य सप्तमांशोयम् । $\frac{८६४१}{५०४}$ अथ भगणांशमितैर्दोयांशैरेतावदायु $\frac{८६४१}{५०४}$ स्तदेष्टैः किमिति । अत्र दिनादिफलानयनाय पुनर्भगणांशा गुणकस्तुल्यगुणहारयोरपगमे ग्रहः स्वोच्चहीनः स चेत्षड्भहीनो भचक्राद्विशोध्याय भागीकृतः सन् ॥ कुवेदतुर्नागैर्हतो वेदषाचैर्विभक्तो दिनाद्यं भवत्येवमायुरितिप्रकारो निष्पद्यते । एकदेशिनस्तूच्चस्थे ग्रहे शून्यमितमुच्चग्रहान्तरं स्यात्तदानीमेव परमायुरंशमितमायुर्भवति यदोच्चग्रहान्तरं शून्याधिकं स्यात्तदानुपातः । यदि शून्यमितेरन्तरांशैः परमायुरंशो लभ्यते तदेष्टग्रहोच्चान्तरभागैः किमिति त्रैराशिकेन वासनां व्यावर्णयन्ति ॥ श्रीमच्छिवगुरुचरणान् प्रणम्य राशेः खहरत्वेन फलानन्त्यादेतदयुक्तमेवेति यद्वयं वदामस्तद्विद्वांसो विदांकुर्वन्तु । न च शून्यखहरघाते सैव भवन्तीति न खहरत्वमिति वाच्यम् । खगुणः खमितिपाटीगणितोक्तेः । तस्मादपठितपाटीगणितेन सूर्येण यदुक्तं तत्पाटीगणितानभिज्ञतया यष्टिसाधनं भास्करोक्त विषुवद्दिवसे व्यभिचरतीतिसुन्दरसिद्धान्ते ज्ञानराजोक्तिवत्प्रत्याख्येयम् । यद्व्यायुष्मता शून्यमितेरन्तराशेर्यदिपरमायुरंशो लभ्यते तदेष्टैः किमिति त्रैराशिकेन फलं दिनाद्यं भवतीत्युक्तं तदपि फलमन्यजातिमध्ये तदिति पाटीगणिताज्ञानादेवेति बोध्यम् । वस्तुतस्तु दिनादिकमेव फलमायाति परं तत्र हेतुरपर इति वक्ष्यमित्युपरम्यते ॥

अथैतेषु सिद्धेषु पिण्डाख्यायुष्षु लग्नायुरानयनमाह ॥

आक्षिप्ताः खलु खेऽङ्का विभतनोर्वर्षादिपैण्डा-
धिके लग्नायुः ॥

विभतनोः विगतबलग्नस्य । शेषमुत्तानम् । अत्रोपपत्तिः । बृहज्जातके । होरा त्वंशप्रतिममायुः प्रयच्छतीति पिण्डायुःप्रकरणेऽभिहितम्वाल्लग्नभुक्तनवांशतुल्यमायुः सिद्धम् । तत्रानुपातः । आभिः कलाभिः २०० चेदेको नवांशस्तदेष्टाभिर्विगतलग्नलिप्ताभिः कतीति नवांशा भवेयुः । एकेन नवांशेनैकं वर्षं तदैभिर्नवांशैः कियन्तीति नवांशसमान्येवायुर्वर्षाणीत्युपपन्नम् । पिण्डायुर्वदेव निसर्गजीवशर्मोक्ते कर्तव्य इत्युक्तेस्तत्रायेनदेवायुरिति युक्तम् । नन्वंशायुषि पिण्डायुषि चांशप्रतिमं लग्नायुरिति सर्वजातकेषु द्विरुक्तमस्ति । आचार्योक्तप्रकारेण त्वंशायुषि लग्नायुःपरमं द्वादशवर्षतुल्यं पिण्डायुषि परमं नववर्षतुल्यमागच्छति तत्र को हेतुरिति चेत् । शृणु तर्हि । पिण्डायुषि होरा त्वंशप्रतिममायुर्ददातीत्युक्तं तत्र नवैव नवांशा इति परमं लग्नायुर्नवैव वर्षाणि । अंशायुर्दाये तु किं त्वत्र भांशप्रतिमं ददातीत्यभिहितं तत्र भपदोपादानस्येदं तात्पर्यं लग्नं यस्य राशेर्नवमांशे वर्तते स राशिर्मेषादेर्यावत्संख्यो भवति तावन्तो वर्षा इति । अतोंऽशायुषि परमं लग्नायुर्द्वादशवर्षाणीति सिद्धम् । अंशायुषि सौर्यान्विता राशिसमं चायुः प्रयच्छन्तीति सर्वैरुक्तं पिण्डाद्यायुर्दायेषु तु केनापिप्रमाणेन तथा नोक्तं केन चिदेकदेशिनोक्तं तन्मतभेदेन बहुसंमतत्वादंशतुल्यमेवायुरिति पूर्वमतं साधु ॥

अत्र यवनः ॥

निस्त्रिंशैस्तदंशकसमं कैश्चिद्भतुल्यं स्मृतम् ॥

स्पष्टम् । तथा च यौवनिः । आयुष्यवर्षेष्वप्राप्तलग्ने विहाय राशीन्कुलमित्रिकेण । भक्ते द्विगत्या फलमब्दपूर्वं तस्माद्विलग्नायुषि तद्ध योज्यम् ॥ १ ॥ अन्येषु पिण्डादिषु आयुष्षु । अवदत्

चार्याद्बले नतलग्नं तस्मिन् अबले बलाढ्ये वा लग्न इत्यर्थः। लग्नस्य राशीन् विहाय शेषभागानां कलाद्विशत्या हृता लब्धमब्दादि यत्तल्लग्नायुषि लग्नायुर्निमित्तं योज्यं संग्राह्यमित्यर्थः। चर्मणि द्वीपिनं हन्तीतिवल्लग्नायुषीति निमित्तसप्तमी। आयुष्प्रत्ययाध्येषु बलाढ्यलग्न इति पाठेऽपिशब्दो भिन्नक्रमस्तेन बलाढ्यलग्नेपि। अबले बलवत्यपि वा लग्ने इत्यर्थः। बलाढ्यलग्नेपीति कथनमंशायुर्बलाने बलवत्यपि किं विलग्नायुषि न चेत्यमित्येतदर्थमिति मिश्रैः सम्यगुक्तम्। सूर्यज्योतिर्विदस्तु आयुस्तथैतेष्वबले विलग्ने इति पाठः कल्पितः। न चासौ युक्तः। बलवति लग्ने सत्यायुरनिर्देशे न्यूनतादोषप्रसङ्गात्। के चित्त्वायुस्तथैतेषु बलाढ्यलग्ने इति पठित्वा तथैवायुः साध्यं राशितुल्यवर्षं योज्यमित्यर्थः। बलवति लग्ने सतीति व्याचक्षते तदपि न चतुरस्रम्। सबले लग्ने-राशितुल्यवर्षयोगेनार्षशास्त्रविरोधादबले त्वायुषोनुक्तत्वान्न्यूनतादोषतादवस्थ्याच्च॥

अथ परमतमाह॥

यत्नेशेशोधिबलस्तदैव हि परैः॥

यदांशेशो बली तदांशतुल्यं लग्नायुर्यदिराश्यधिपो बलवांस्तदा राशितुल्यमिति परैः कल्याणवर्मगुणाकरादिभिरुक्तं राशिनवांशनाथयोर्बलिनोः सतो राशितुल्याव्द्युक्तं लग्नांशायुःकार्यमित्यर्थत एव सिद्धम्।

अन्यदप्याह॥

तेनाढ्यमन्यैर्दशायुर्वत्तु॥

अंशैः सममायुरंशायुषा तुल्यमंशायुर्वत् तेन तुल्यमित्यादिना वतिप्रत्ययः। यल्लग्नायुः स्याल्लिप्ताः खनगोद्धृता इत्यादिप्रकारानीतं तत्तेन राशिनाथे बलोपेते राशितुल्यायुषा युक्तं कार्यमंशेशबलिन्यंशसमेन युक्तं कार्यं द्विगुणं कार्यमिति यावत्॥

एवमन्यैरुक्तं सिद्धान्तमाह ॥

अथ चांशतुल्यमखिलोक्तं ग्राह्यमेवादिमम् ॥ २४ ॥

अत्रैवकारो भिन्नक्रमस्तेनाखिलोक्तमंशतुल्यमादिममेव ग्राह्यमित्यर्थः ।

अथैषां चतुर्णामायुषां व्यवस्थामाह ॥

अंशायुश्च तनावितेऽधिकबले पैण्डं निसर्गं विधौ
स्याच्चेत्तुल्यबलं द्वयोर्युतिदलं तज्जायुषोस्त्रेत्त्रयः ।
त्र्यायूंषि त्रिबलैर्निहत्य च युतिर्वीर्यैक्यहृद्वा त्रिजायुर्युत्या त्रिलवोऽथ जैवमुदितं चेद्धीनवीर्यास्त्रयः ॥ २५ ॥

अत्राधिकबल इत्यत्र लिङ्गविपरिणामेनाधिकबलायामिति तनुविशेषणं बोद्धव्यम् । स्त्रियांमूर्तिस्तनुस्तनूरित्यभिधाने तनुशब्दस्य स्त्रीलिङ्गत्वात् । षड्रूपाधिकं षड्बलैक्यं यस्य सोऽधिकबलस्तत्र लग्नेऽधिकबलेंऽशायुः साध्यं सूर्येऽधिकबले पिण्डायुश्चन्द्रे नैसर्गिकं साध्यम् । चेल्लग्नार्कचन्द्रास्त्रयोऽपि हीनवीर्यास्त्रिरूपाल्पबलास्तदा जीवशर्मायुर्दायः साध्यः । यस्य त्रिरूपाधिकं षड्रूपाल्पं बलं स मध्यबलस्तत्र लग्ने मध्यबलेंऽशायुः सूर्ये पैण्डं चन्द्रे निसर्गजं साध्यम् । अथ मिश्रायुःसंभवज्ञानपूर्वकं तत्साधनमाह । स्याच्चेदिति । अस्यायं तात्पर्यार्थः । यदि लग्नार्कचन्द्रास्त्रयोऽपि षड्रूपाधिकबला अथ वा त्रयोऽपि मध्यबलास्तदा च लग्नबलेन दिनादिकमंशायुः संगुण्य सूर्यबलेन पिण्डायुः संगुण्य चन्द्रबलेन निसर्गायुः संगुण्यैषां योगं लग्नार्कचन्द्रबलानां योगेन भजेल्लब्धं वर्षादि स्फुटं मिश्रायुर्भवतीत्ययं मुख्यः । अथ चांशपैण्डनिसर्गायुर्योगस्य तृतीयांशो मिश्रायुः स्यात् । अथ यदि द्वौ षड्रूपाधिकबलौ यद्वा त्रयाणामपि षड्रूपाधिकबलाभावे द्वौ मध्यबलौ तदा तत्तदायुस्तत्तद्बलेन संगुण्यानयोर्योगं तयोर्द्वयोर्बलयो-

गेन भवेल्लब्धं स्पष्टं मिश्रायुः । मुख्यः पक्षोऽयम् । यद्वा तत्तदायु-र्योगस्यार्द्धं मिश्रायुः स्यात् । अत्रोपपत्तिः । सारावल्याम् । अंशोद्भवं विलग्नात्पिण्डं भानोर्निसर्गजं चन्द्रात् ॥ एतेषां यो बलवानेकतमं तस्य चिन्तयेदायुः ॥ लग्नदिवाकरचन्द्रास्त्रयोऽपि बलरिक्ततां यदा यान्ति । परमायुषः स्वरांशं ददति खगा जीवशर्मोक्तम् । अतो यदुक्तं तद्युक्तम् । अथ यदि द्वौ तुल्याधिकबलौ मध्यबलौ वा तदा तत्तद्बलवशादायुर्द्वयप्राप्तौ सत्यां विनिगमकाभावादेकतरायुरवलम्बो न कर्तुमुचित इत्यायुर्द्वययोगार्द्धं ग्राह्यमिति पर्यवसितम् । परं तत्तद्बलवशात्प्राप्तिरिति द्वयोर्बलयोरेकाकारतायां तत्तदायुषोर्द्वमयुक्तं विलक्षणयोर्द्वयोर्बलयोरेकाकारतायोगार्द्धं विश्रान्ता । तत्रानुपातः । यदि बलद्वययोगार्द्धेनैतदायुषोऽर्द्धं लभ्यते तदायुःप्रापकैतद्बलेन किमित्यत्र हरस्य छेदांशयोः परिवृत्तौ द्वयं गुणो द्वयं हरोऽस्त्येवेति तुल्यत्वाद्द्वयस्य नाशे कृते एतदायुष एतद्बलं गुणो बलद्वययोगो भाजकः । एवमेव द्वितीयायुर्दाये तद्बलं गुणो बलद्वययोगो भाजकः । एवं भाजकयोरैक्ये तत्तदायुस्तत्तद्बलेन संगुण्य योगं बलैक्येन भजेल्लब्धं मिश्रायुर्भवतीत्युपपन्नम् । एवं त्रिष्वपि षड्रूपाधिकबलेषु मध्यबलेषु वोपपत्तिर्वेद्या । यस्तु तुल्यबलाद्यत्र विषष्ट्यंशपर्यन्तं बलसमत्वं विवक्षितमिति केनचिदुक्तं तदसङ्गतम् । यतस्तादृशतुल्यबलत्वे प्रकारद्वयसाधितमिश्रायुषस्तुल्यत्वोपलम्भेन लाघवात्त्रिजायुर्युत्यास्त्रिलब्धत्वेवोक्तं स्यात् । तस्माद्धीनत्वं मध्यत्वमुत्तमत्वमादाय तुल्याधिकतेत्येव समीचीनमिति मन्तव्यम् । किं च पराशरेण त्रिजायुर्योगस्य तृतीयांशं विहायैव मिश्रायुरुक्तम् । आयुश्च परमं हत्वा स्वेनस्वेन बलेन च । विभजेद्बलयोगेन ग्रहाणां दाय एव स इति । तस्माद्द्विषष्ट्यंशपर्यन्तबलसाम्यं ग्राह्यमिति पक्षो न युक्तः ॥ यत्तु द्व्यायुर्योगार्द्धं त्र्यायुस्तृतीयांशो वा कार्यस्तच्छ्रीधराचार्यसंमतं मिश्रायुरिति श्रीपतिनोक्तं तदशुद्धम् । यत आह श्रीधराचार्यः । अंशायुर्लग्नवीर्येण पैण्डं भानोर्निसर्गजम् । हन्याच्चान्द्रेण

सर्वेऽपि संयोज्यैकत्र भाजयेत् । लग्नार्कचन्द्रवीर्याणां संयोगेन स्फुटं फलम् । वर्षादिकं भवेदायुः श्रीधराचार्यसंमतमिति ॥

अथ हीनबलत्वादिलक्षणं तथांशायुरेव बहुसंमतत्वाद्ग्राह्यं
तथेदमायुः केषां घटत इति वदति ॥

अल्पे हीनबलो बली षडधिके वीर्ये ग्रहश्चोदयो
भिन्नं स्वस्वमते स्मृतायुरिति यत्प्राच्यैर्व्यवस्थापितम् ।
अंशायुर्बहुसंमतं भवति यत्सत्यं च सत्योदितं
स्याद्धर्मेष्टसुशीलपथ्यसुभुजां न स्यादिदं पापिनाम् ॥ २६ ॥

अधिके षडल्पे बले ग्रहो लग्नं वा मध्यबलमित्यर्थात् सिद्धम् । शेषमतिरोहितार्थं व्याख्यातं च स्वकृतटीकायामाचार्यैः । अत्रोपपत्तिः । षडेव बलानि सन्तीति प्रत्येकं यदि संपूर्णात्मकं रूपं बलं गृह्यते तदा षड्रूपाणि भवन्तीति षड्रूपबलवान्प्रत्येकं संपूर्णबलोपपन्नो बली युक्त एव । षड्रूपादधः संनिहितं मध्यबलं षड्रूपाणामधः सांनिध्यं त्वर्द्धात्मकचिह्नपर्यन्तम् ॥ मध्यबलादधः संनिहितं चिह्नाल्पहीनं बलमिति युक्तमेव ॥

अथ शिष्यभ्रान्तिनिरासार्थमाह ॥

हानिर्यास्तमितेरिभेऽप्यनुमतांशोत्थेऽल्पबुद्ध्या न त-
द्यस्माच्चैष्टिक आश्रयेऽस्ति निखिलैः पिण्डादिवृत्त्या ततः ।
आयुः सौरमिदं यतोऽब्दगणना सौरात्ततः सूरिभिः
प्रोक्तं सत्यमसद्यदल्पकथितं नाक्षत्रकं सावनम् ॥ २७ ॥

केन चिदाचार्येण अस्तमितेरिभे या हानिरर्द्धचक्रतुल्या सांशोत्थे आयुर्दाये अल्पासौ बुद्धिश्च तया हेतुभूतया अनुमता स्वीकृता न तदिति तन्मतं न समीचीनमित्यर्थः । अल्पबुद्ध्येति करणे तृतीया । शेषमाकरे स्पष्टम् ॥

एवं मनुष्यायुर्विधिमद्ध्वस्याप्याधुना तत्परमायुरन्यप्राणिनां परमायुःपुरःसरमायुर्दायानयनं चाह ॥

पञ्चाहं नखभूसमा १२०।०।५ न्तकरिणां व्याघ्राद्यजादेर्नृपाः १६ गोकाल्योश्च जिना २४ स्तथोष्ट्रखरयोस्तत्वानि २५ सूर्याः १२ शुनाम् । अश्वायुः परमं रदा ३२ न्तवदिहानीयायुरेषां परायुर्निघ्नं न्तपरायुषा च विहृतं तेषां स्फुटायुर्भवेत् ॥ २८ ॥

गतदप्याक्रं स्फुटम् । उपपत्तिस्तु यदि मनुष्यपरायुषा १२० । ० । ५ प्रमाणीभूतेनेदमानीतं मनुष्यवदायुरश्वादीनामवाप्यते तदा स्वस्वपरायुषा किमित्यनुपातेन सुगमा ॥

भवामना या समकारि वृत्तिर्दिवाकरेणामलकेशवोक्तेः ॥
सलग्नखेटायुष एष तत्र दायाधिकारः परिपूर्तिमागात् ॥ ५ ॥

इति दिवाकरप्रणीतायां केशवपद्धतिटीकायां प्रौढमनोरमाभिधायामायुर्दायाध्यायः पञ्चमः ॥

अथ दशाध्याय आरभ्यते ।

तत्रादौ दशास्वरूपं तच्छुभाशुभफलं चाह ॥

यस्यायुर्यदसौ दशास्य च शुभेष्टोच्चस्वभांशे तथा-
रोही नीचपरिच्युतस्य यदि सा कष्टारिनीचांशभे ।
त्यक्तोच्चे त्ववरोहिणी भवति सा मध्योच्चमित्रस्वभां-
शे सदृष्टयुतस्फुरत्करबलिष्ठेष्टाधिके स्याच्छुभा ॥ २९ ॥

यस्य ग्रहस्य यदायुरसौ अस्य दशा स्यात् ॥ अत्रादसश्शब्दस्य विधीयमानलिङ्गता शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादौ प्रसिद्धा । दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणामित्यस्य व्याख्यावसरे लिखितं च क्षीरस्वामिना । सर्वनाम्नां विधीयमानानूद्यमानलिङ्गग्रहणे कामचार इति । इष्टोच्चस्वभांशे वर्तमानस्य ग्रहस्य

दशा शुभा स्यात् । भं चांशश्च भांशम् । इष्टं च उच्चं च स्वं च तेषां भांशं तस्मिन् मित्रस्योच्चस्य वा स्वस्य वा राशौ नवांशे वा तिष्ठतो ग्रहस्य दशा शुभा स्यादित्यर्थः । नीचपरिच्युतस्य दशारोहा स्यात् ॥ यदि नीचपरिच्युतो ग्रहः अरेः शत्रोर्नीचस्य वा अंशके नवमांशे स्यात्तदारोहिणी दशा शुभापि कष्टा स्यात् । मिश्रफलदा भवतीत्यर्थः । त्यक्तमुच्चं येन स तथा तादृशे ग्रहे दशाऽवरोहिणी स्यात् । इयमशुभफलप्रदा । उच्चमित्रस्वराशीनां नवांशे यदि त्यक्तोच्चो ग्रहः स्यात्तदावरोहिणी दशापि मध्या स्यात् । सद्दृष्टयुतस्फुरत्कर-बलिष्टेष्टाधिके ग्रहे सति दशा शुभा स्यात् । सद्भिः शुभग्रहैर्दृष्टयुतः सद्दृष्टयुतः । स्फुरन्तः करा यस्य स तथा । बलिष्ठः षड्बलाधिकबलवान् । इष्टेनाधिक इष्टाधिकः अत्र कर्मधारयः समासः । तदेतदुक्तं बृहज्जातके । भ्रष्टस्य तुङ्गादवरोहसञ्ज्ञा मध्या भवेत्सा सुहृदुच्चभांशे । आरोहिणी निम्नपरिच्युतस्य नीचारिभागेष्वधमा भवेत्सा । लग्नदशायाः फलं तत्रैवोक्तम् । उभयेऽधममध्यपूजिता द्रेष्काणेश्चरमेषु चोत्क्रमात् । अशुभेष्टसमा स्थिरे क्रमाद्धोरायाः परिकल्पिता दशेति ॥

इदानीं दशाक्रममाह ॥

स्यादाद्या हि दशाधिकौजस इहाङ्गार्काब्जकानां तत-
स्तत्केन्द्रादियुजामथ द्विबहवो वीर्यक्रमेणैव हि ।
चेदोजःसमतायुषोऽधिकतयायुस्तुल्यता चेद्दशा
मौढ्यात्स्याद्दिनक्रमात्क्रमविधौ वीर्यं हि तत्रोच्यते ॥ ३० ॥

अङ्गार्काब्जकानां लग्नसूर्यचन्द्राणां मध्येऽपेक्षया यः कि चिद्व्यधिकषड्बलैस्तस्याद्या दशा स्यात् । बलसाम्ये यस्यायुर्वर्षाण्यधिकानि तस्य प्रथमा दशा । आयुः साम्ये तु पूर्वं पठितस्य प्रथमा दशा । लग्नार्कचन्द्राणां लग्नार्कयोर्लग्नचन्द्रयोर्वा बलायुषो' साम्ये लग्नस्य

प्रथमं पठितत्वादाद्या दशा । सूर्येन्द्वोर्बलायुषोस्तुल्यत्वे सूर्यस्य प्रथमा दशेत्यपि ध्येयम् । के चिदर्काङ्गेन्दुदयानामिति पठन्ति । तदयुक्तम् । लग्नार्कचन्द्राणामिति क्रमस्य सर्वैः पठितत्वात् । तथा च गर्गः । बली लग्नार्कचन्द्राणामिति । वृहज्जातके ॥ उदयरविशशाङ्केति । लघुजातके लग्नार्कशशाङ्कानामिति । श्रीनाभेयपद्धतौ लग्नार्कशीतरश्मीनामिति । सारावल्याम् । लग्नार्कशीतरश्मीनामिति । होरामकरन्दे । विलग्नार्केन्दूनामिति । श्रीपतिपद्धतावपि । लग्नादित्योडुपानामिति । एवं सर्वेषां प्रामाणिकरीत्यापाठक्रमात्तस्य च बलायुः साम्ये दशाक्रमनिर्णयप्रयोजकत्वाच्चाङ्गार्कोन्दुकानामिति पाठः साधीयान् । अत्र स्वार्थिकः स्वार्थे क प्रत्ययः । ततोनन्तरं लग्नार्कचन्द्रान्यतमस्य यस्य पूर्वा दशा तस्मात्केन्द्रपणफरापोक्लिमस्थानां ग्रहाणां दशाः स्युः केन्द्रस्थस्य पूर्वं दशानन्तरं पणफरस्थस्यानन्तरमापोक्लिमस्यस्येत्यर्थः । अथ यदि केन्द्रादिगता द्विच्यादयो भवेयुस्तदा वक्ष्यमाणवीर्याधिक्यशालिनो ग्रहस्याद्या दशा तदनन्तरं ततोल्पबलस्य तदुपरि तस्मादप्यल्पबलस्य दशा स्यादित्यर्थः । यदि रवीन्द्वन्यतरस्याद्या दशा तदा तत्केन्द्रादिस्थलग्नस्यापि दशा स्यादिति बोध्यम् । बलसमत्वेधिकवर्षदातुः पूर्वा दशानन्तरमल्पवर्षदातुर्दशा स्यात् । वर्षसाम्ये तु मौढ्यात्सूर्यसांनिध्यवशेनास्तमनादुदितक्रमाद्दशा स्यात् । मौढ्यादिति ल्यब्लोपे पञ्चमी । मौढ्यं संप्राप्येत्यर्थः । यस्येनाछन्नभावेनास्तं प्राप्तस्य पूर्वमुद्गमस्तस्य पूर्वादशानन्तरोदितस्यानन्तरं दशा । अथोदयसाम्ये उदितक्रमाल्लग्नार्कसोमाधनिजबुधेत्याद्युक्तक्रमाद्दशा स्यादिति ध्येयम् । वृहज्जातके वर्षसाम्ये प्रथमोदितस्य प्रथमं दशेत्युक्तं तत्र प्रथमोदितस्येति सामान्यतः कथनमर्थद्वयलाभार्थम् ॥ सूर्यवशात्प्रथममुदितः प्रथमोदित इत्येकोर्थः । प्रथममुदित उक्त इति द्वितीयः । अनयोर्मध्ये बहुसंमतत्वात्प्रथमपक्षो मुख्य इतरो गौण इत्याहुः । तत्र सूर्यवशादुदयसाम्ये प्रथमपक्षेण निर्णयासंभवे गौणपक्षेण निर्णयो ऽयुक्त

पक्ष । तथा च यवनेश्वरः । वयोऽधिको यः प्रथमोदितो वा ग्रहः स पूर्वं पठितो दशेशः ॥ अस्यार्थः । बलसमानतायां सत्यां यो वयसायुषाधिकः स पूर्वं दशेशः । यदि चायुःसाम्यमपि तदा सूर्यवशात्प्रथमोद्गतो यः स पूर्वं दशेशः । यद्युदयसाम्यमपि तदा यः पूर्वं पठितः स दशेश इति ॥ अत्रेदमवधेयम् ॥ चन्द्रस्याद्यायां दशायां केन्द्रादिगानां लग्नार्कभौमगुरूणां बलायुषोः साम्ये लग्नार्कयोः सूर्यवशात्प्रथमे द्गमनलक्षणप्रथमपक्षस्यासंभवादपरपक्षाश्रयणेन लग्नस्य प्रथमोक्तत्वादाद्या दशा ततोऽर्कस्य द्वितीया । भौमगुर्वोर्यः सूर्यवशात्प्रागुदितस्तस्य तृतीयापरस्य चतुर्थी दशा । उदयसाम्ये तु गौणपक्षेण निर्णये प्राप्ते प्रथमं पठितत्वाद्भौमस्य तृतीया चतुर्थी गुरोरिति । अत एव मिश्रोक्तपद्धतौ तस्यापि साम्ये प्रथमोदितस्य लग्नार्कचन्द्रारबुधादिकस्येति । यत्तु मिश्रकृतश्रीपतिपद्धतिटीकायां लग्नस्य तृतीया चतुर्थी सूर्यस्येत्यादि दृश्यते तल्लेखकदोषात्पतितमिति ध्येयम् । इदं पुनरिहावधेयम् । यदि केन्द्रे कोऽपि न ग्रहस्तदा पणफरस्थस्य पूर्वा दशानन्तरमापोक्लिमस्थस्येत्यादि । तदाह वराहः । तुहिनफलविपाकः केन्द्रसंस्थाद्यभावे भवति हि फलपक्तिः पूर्वमापोक्लिमेपि ।

इदानीं लग्नदशाप्राथम्ये सति तत्केन्द्रादिग्रहदशाक्रमाव-
गमार्थं वलं साधयति ॥

चेल्लग्नाद्यदशा स्वभावजफलश्चौजांसि पाकक्रमे ॥

ओजांसि स्वस्वपञ्चबलैक्यानि । पाकक्रम इति निमित्त सप्तमी । पाको दशा तत्क्रमनिमित्तं बलानि स्युरित्यर्थः । शेषं स्पष्टम् । अत्रोपपत्तिः । लग्निकदशाप्राथम्ये लग्नाद्ग्रहाः सन्तीति लग्नात्केन्द्रपणफरादयो भावाः सिद्धा जातास्तथा सत्येको भावांशतुल्ये मुख्ये केन्द्रेऽन्यो गौणकेन्द्रे स्थित इति संपूर्णन्यूनभावफलात्मिकया मुख्यगौणकेन्द्रादिस्थित्या वचनाद्बलेन च दशाक्रमविचारे प्राप्ते समभावफ-

लेषु सर्वेषु ग्रहेषु यथास्थितबलेन निर्णयो यस्याधिकं बलं पूर्वं तस्य दशा ततस्तदूनबलस्येति । तत्र रूपतुल्ये समभावफले कल्पितेचानुपातः ॥ यदाखिलखगानां रूपतुल्ये समभावफले ग्रहस्थे तद्बलतुल्यं बलं तदमुष्मिन्भावफले कियदिति स्वभावजफलद्योजांशीत्युपपन्नम् । अथार्कस्य चन्द्रस्य वाद्यदशायां केन्द्रादिगदशाक्रमज्ञानार्थं वीर्यमाह ॥

अर्केन्द्वोश्चेत्प्रथमाखगोदयबलांघ्रिर्भेन्यवर्गोऽर्द्धितः ॥
स्वैर्वर्गेशबलैर्हता बलमितैक्यम् ॥

स्पष्टमेतदाकरे ।

अथैकदेशिमतमाह ॥

मूलिनैक्यं परे ॥

परे आचार्या एवं वदन्ति मूलं संजातं येषां ते मूलिनोऽस्मादस्य संजातं तारकादिभ्य इतजितीतच् । तादृशानां स्ववर्गस्थानां ग्रहाणामैक्यं बलं स्यादिति ।

अथ प्रसङ्गेन रिष्टकारिष्टहरबलमाह ॥

अथैवं रिष्टभङ्गकृज्जेऽधिकबलो भङ्गा तदा रिष्टहृत् ॥ ६१ ॥

खगोदयबलाङ्घ्रिरित्यनेनैव प्रकारेण रिष्टभङ्गकृज्जे बले साध्ये इत्यर्थः । अत्र प्रगृह्यत्वाभावः प्रामादिकः । अतो रिष्टभङ्गकृज्जे बहुबले इति पाठ्यम् । यत्र रिष्टभङ्गकृज्जे बले साधिते सर्वाणि सप्तम्यन्तत्वेन यथाश्रुतमेव व्याख्येयमिति वा । यदि रिष्टभङ्गा रिष्टकारकेभ्यो बहुवीर्यस्तदा रिष्टभङ्गः स्यात् । अयं मुख्यः पक्षः ।

यदा तयोर्बलसाम्यं तदानेन मुख्यपक्षेण निर्णयाऽभावे पक्षान्तरेण निर्णयमाह ॥

भङ्क्तृ रिष्टकृतो स्थानादिनशुभासत्त्वं च नीचोच्चयुक्ता-
यस्यास्त्रयतां विचार्य मतिमान् रिष्टस्य भङ्गं वदेत् ॥

भङ्क्तुरर्थाद्रिष्टभङ्क्तुः ॥ अत्र ढ्लोपे पूर्वस्य दीर्घ इतिसूत्रेण दीर्घत्वम् । अत्र वर्गे इत्यध्याहर्तव्यम् । नीचोच्चभास्तादयस्येत्यत्राद्यशब्देन मूलत्रिकोणस्वाधिमित्रमित्रामित्राध्यमित्रगृहजयपराजयोत्पातानां संग्रहः । मतिमानिति हेतुगर्भम् । तेनायमर्थः संपन्नः ॥ रिष्टभङ्गेश्वरयोर्वर्गे राशिहोरादौ शुभासत्त्वं सौम्यपापसंबन्धित्वं तथा स्वोच्चत्रिकोणस्वाधिमित्रमित्रवैर्यधिवैरिगृहजयपराजयोत्पातास्तनीचेषु समाश्रितानां संबन्धित्वं हिताहितत्वविशिष्टं विचिन्त्यम् । रिष्टभङ्गेशयोः सप्तवर्गेशान् सौम्यपापान् दर्शितस्वोच्चादिनीचान्तसमाश्रितांश्चैते हिता एते त्वहिता इति चिन्तयेदित्यर्थः । रिष्टशभङ्गेशयोः सौम्यपापत्वचिन्तनं विहाय दर्शिततुङ्गादिनीचान्तसमाश्रयत्वं च हिताहितत्वेन चिन्त्यम् । तथा च श्रीधरः । वर्गनाथान्विचिन्त्यादौ सौम्यपापान् हिताहितान् । नीचोच्चगांस्तथान्यांश्च शोधयेतान्परस्परमिति ॥ अत्र समस्यार्द्धमित्रत्वार्द्धशत्रुत्वेन हिताहितत्वसाम्यात्समो न गणनीय इति प्राहुः । एकेन शुभेन समं मित्रमधिमित्रं च । एकेन पापेन समानममित्रमध्यमित्रं च ॥ द्वाभ्यां शुभाभ्यां समं त्रिकोणं स्वगृहं च । चतुर्भिः शुभैः समानः स्वोच्चो युद्धजयश्च । चतुर्भिः पापैः समो नीचस्थ औत्पातिको युद्धजितोऽस्तंगतश्च ॥ तथासति रिष्टकरस्य सप्तवर्गेशानां सौम्यपापत्ववशेन स्वाधिमित्रादिगृहस्थितिवशेन दर्शितस्वोच्चादिवशेन च या हितसंख्या या चाहितसंख्या तयोरन्तरं कृत्वा हितमहितं वा शेषं ग्राह्यम् । तथ भङ्गेश्वरस्यापि हितमहितं वा शेषं ग्राह्यम् । पश्चादरिष्टेशभङ्गेशयोर्द्वयोरपि यदि हितात्मकं शेषं तदा रिष्टभङ्गोऽथ वा रिष्टकर्तुरहितात्मकशेषाद्रिष्टभङ्क्तुर्हितात्मके शेषेऽधिके रिष्टभङ्गस्तथा रिष्टकरस्याहितशेषाद्रिष्टकरस्य हितशेषेऽधिके रिष्टभङ्गोऽन्यथा तु रिष्टमेवेत्याहुः ॥ अथ रिष्टकारिष्टहरबलानयने तावदुपपत्तिरुच्यते । वृद्धयवनः । दृग्गोपम्स्यार्धेनितम्तु वर्गे भङ्गस्तदा रिष्टकरात्स्वबली चेत् । रिष्टकर्तान्यमतनस्य

सप्तवर्गे न्यूनबलो रिष्टकर्तुरपेक्षया रिष्टहर्ता बलिनः सप्तवर्गे बलाधिकस्तदा रिष्टभङ्गोऽन्यथा तु रिष्टमेव ॥ अयमर्थः रिष्टकर्ता न्यूनबलस्य राशेर्न्यूनबलस्तथा न्यूनबलस्य होरायां न्यूनबल इत्यादि तदपेक्षया रिष्टभङ्क्ता बलिनो राशेर्बली तथा बलिनो होरायां बलीत्यादि । अत्र प्रागुक्तयवनवाक्ये राशेर्द्विवर्गात्मकत्वमित्यष्टौ वर्गास्ततो रिष्टेशभङ्गेशयोर्बलमष्टसु स्थानेषु स्य. एवं तत्र द्वे स्थाने गृहसंबन्धिनी षट् स्थानानि होरादिसंबन्धीनि । अत्र रिष्टेशभङ्गेशयोर्द्वयोरपि सप्तवर्गेशबलानां साम्ये यथास्थिततत्तद्वर्गेशबलैर्न निर्णय इति स्थितौ सुगमार्थमष्टतुल्ये समबले पूर्वस्थापनेन साकमेकक्रमलाभार्थं कल्पितेऽत्र त्रैराशिकम् । द्वयोरपि वर्गेशानां सर्वेषामष्टतुल्ये समबले स्थिते यदि राशीशस्याष्टतुल्ये समबले राशिस्थबलतुल्यं बलं तदास्मिन् राशीशबले किमिति राशिस्थबलं राशिबलेन गुणनीयमष्टभिर्भाज्यमेवं राशिसंबन्धि द्वितीयस्थानस्थबलं राशिनाथबलेन गुणनीयमष्टभिर्भाज्यमनयोर्योगे राशिस्थबलमेकस्थानस्थमेव राशीशबलेन गुण्यं चतुर्भिर्भजनीयमित्युपपन्नम् । एवं होरादिस्थबलं होरादीशबलेन गुण्यमष्टभिर्भाज्यमित्यप्युपपन्नम् । यद्वा द्वयोरप्यष्टस्थानस्थे तुल्ये समे बले स्थिते यदि राशिस्थे समबलेऽष्टतुल्ये राशीशबलतुल्यं बलं तदास्मिन् राशिबले किमिति स एव राशिस्थराशीशबलघातोऽष्टभक्तो निष्पन्न इत्यनयोः पक्षयोर्न कोऽपि विशेष इति मिश्राः । पश्चादेषामैक्यं सर्वबलमिति युक्तम् । यत्सर्वबलमधिकं तन्मूलमप्यधिकमिति सर्वबलस्य मूलग्रहणे न कापि हानिः । यत्तु प्रत्येकं मूलमादाय तदैक्यं सर्वबलमिति मतं तन्निर्मूलत्वादुपेक्ष्यम् । किं च यत्र रिष्टहर्तुर्बलयोगाद्रिष्टकृतो बलयोगोऽधिकस्तत्र रिष्टहर्तुर्बलमूलयोगाद्रिष्टकर्तृबलयोगः स्वल्प इत्यादि दूषणं धीमद्भिरवलोक्यम् । यत्तु श्रीपतिनेष्टकष्टगुणितबलयोरन्तराद्बलमित्युक्तं तत्र यतस्तथासति रिष्टकरस्य भङ्गकरस्य वा बलपूर्णोपदोच्चचेष्टाबलयोगो रूपं तदेष्टकष्टबलयोः साम्यात्तदन्तरबले शून्ये

सर्वबलस्य शून्यत्वात्षड्बलपूर्णोऽपि ग्रहो रिष्टकर्ता रिष्टहर्ता वा न स्यात् । स्वप्राचीनश्रीधराचार्यविरोधश्च । अन्यान्यपि दूषणानि श्रीकेशवप्रणीतटीकातोऽध्यवसेयानीति संक्षेपः । अथ शुभास्त्वमित्याद्युदाह्रियते । तत्रेदं सप्तवर्गचक्रं ग्रहाणाम् । अत्र रिष्टकर्ता भौमश्चतुःशुभात्मकस्योच्चस्य एकशुभात्मकमित्रगृहस्थः पञ्चसंख्याकसौम्यवर्गस्थो भौमहोरेशश्चन्द्र एकशुभात्मकमित्रगृहस्थो भौमत्रिंशांशेशो गुरुरेकशुभात्मकाधिमित्रगृहस्थ इति शुभात्मकयोगे हितसंख्या जाता १२ । एवं भौमो द्विसंख्याकपापवर्गस्थो भौमराशीशः शनिरेकपापात्मकशत्रुगृहस्थो भौमद्रेष्काणादिचिक्रस्वामी शुक्रश्चतुःपापात्मकास्तंगतश्चतुःपापात्मकनीचस्थश्च भौमद्वादशांशो बुधश्चतुःपापात्मकास्तंगतो द्विशुभात्मकस्वगृहस्थ इति द्विपापात्मक इति तद्योगे जाता चाहितसंख्या २९ । हिताहितसंख्ययोरन्तरे शेषमहितात्मकं भौमस्य १७ । एवं रिष्टहर्तुर्गुरोर्हिताहितसंख्ये १२ । ८ अनयोरन्तरे शेषं हितात्मकं गुरोः । अत्र रिष्टकर्तुर्भौमस्याहितशेषाद्रिष्टहर्तो गुरोर्हितशेषमल्पमित्यरिष्टमेव । अथेदमवगन्तव्यम् । यत्रोच्चत्रिकोणं स्वगृहं च प्राप्तं स्यात्तत्रोच्चमेव ग्राह्यम् । यत्र तु त्रिकोणस्वगृहे प्राप्ते स्यातां तत्र मूलत्रिकोणमेव ग्राह्यम् । अत्र तु स्वोच्चाधिमित्रगृहादिकं त्रिकोणाधिमित्रगृहादिकं वा प्राप्तं तत्र बाधकाभावात्सकलमपि ग्राह्यमिति । अथ केन्द्रादिगेषु समवीर्येषु ग्रहेषु बलिनः सप्तवर्गेभ्यो निर्बलस्य सप्तवर्गे दशालयोः पौर्वापर्येण दशाक्रमनिर्णये न्याय्ये पूर्ववद्ग्रहस्थानस्थं बलं तत्तद्वर्गेशबलगुणितमेषां योगे पूर्ववत्सर्वबलं सिद्धम् । शेषोपपत्तिः सुन्दरमित्याद्यवलोक्येति संक्षेपः ॥

श्रेष्ठं रिष्टकृतौ दशाक्रम इहौजः श्रीधराद्योदितं
कष्टेष्टग्रहवान्तराप्तं च कृतं तद्युक्तिशून्यं त्यजन् ॥ ३२ ॥

व्याख्यातप्रायमेतत् ।

इदानीमन्तर्दशानयनमाह ॥

अर्द्धस्यैकभगस्त्रिकोणगृहगस्त्र्यंशस्य चास्ते नगां-
शस्याङ्घ्रेश्चतुरस्रगो निजगुणैः पक्तैकभे स्याद्बली ।
अंशादौ कुरु रूपमत्र समतां कृत्वा च नाशं छिदा-
मंशघ्नाः स्वदशा पृथक् खलु लवैक्याप्ता स्युरन्तर्दशाः ॥ ३३ ॥

मूलदशापतेरेकभग एकराशिस्थो ग्रहो निजगुणैः स्वीयगुणैरारोहावरोहोच्चनीचेष्टकष्टादिभिरर्द्धस्य पक्ता पाचको भवति । त्रिकोणगृहगो नवमपञ्चमस्थानस्थस्त्र्यंशस्य पक्ता स्यात् । अस्ते सप्तमे वर्तमानो ग्रहो नगांशस्य पाचकः । चतुरस्रगश्चतुर्थाष्टमस्थानस्थ अङ्घ्रेश्चतुर्थांशस्य पक्ता भवति । मूलदशापतेरिति सर्वत्राध्याहर्तव्यम् । अत्र ग्रह इत्युपलक्षणं तेन लग्नस्याप्यन्तर्दशाभागित्वमिति मिश्राः । वराहमिहिराचार्या अपि । सहोरास्त्वेवं परस्परगता परिपाचयन्ति । गर्गोऽपि । लग्नेन सहिताः सर्वे ह्यन्योन्यं फलदायका इति बृहज्जातकटीकायामुत्पलेनोदाहृतमेतत् । ढुण्ढिराजकृतग्रन्थे जातके लाग्नी दशा जीवदशाप्रयाता दत्ते नराणां सुधनानि सौख्यम् । सख्यं नरेन्द्रेण विवेकतां चेत्येवमादि फलमपि लग्नान्तर्दशा सम्यग् गमयति तेन सर्वग्रन्थेषु ग्रह पाचयतीति ग्रहशब्दाद्ग्रहा ग्रहान्तर्दशापाचका न लग्नमिति प्राचां मतं परास्तम् । एकभे एकराशौ नवमपञ्चमान्यतरस्मिन् सप्तमचतुर्थाष्टमान्यतरस्मिन् वा यदि द्वित्र्यादयो ग्रहा भवेयुस्तदा तन्मध्ये योऽनन्तरानीतवीर्यवान्स एव पक्ता स्यात् । अत्र गुणाकरः । एकर्क्षे यदि भूयांसः सम्भवन्ति नभश्चराः ॥ एक एव तदा तेषां दद्यादन्तर्दशां बलीति ॥ अत्र युक्तिमाह भट्टोत्पलः । सर्वग्रन्थेषु एकर्क्षगस्त्रिकोणगृहग इत्येकवचननिर्देशाद्य एको बली स ग्रहान्तर्दशाभागीति । अथेदं चिन्त्यम् । यद्येकवचननिर्देशादेकस्यैवान्तर्दशापाचकत्वं तर्हि नवमपञ्चमस्थितयोर्मध्ये एकस्यैवान्तर्दशापाचकत्वं स्यात् । न चेष्टापत्तिः । अपसिद्धान्तात् । तस्मादुक्तया एकस्यान्तर्दशेति न साधु । किं तु

वचनादेव । तथा च मयः । यकर्त्तोपगतानां यो भवति बलाधिको विशेषेण । एकः स एव हर्ता नान्ये तत्र स्थिता विहगा इति । वस्तुतस्तु । बहवश्चेत् तेखिलाः । केन्द्रादिगा ग्रहाः सर्वे ददत्येशापहृत्य चेति पराशरोक्तेरन्तर्दशा यदा स्यात्त्रिचतुर्णामेकराशिसंस्थानाम् । बन्धनविनाशदैन्यं विदधात्यशुभग्रहाणां त्विति सारावल्यामुक्तत्वान्निष्कृष्टार्थप्रतिपादकयवनादिभिरेकराशिगानामेकोंशं हरति बलीत्यादिवदनुक्तत्वाट्टर्शितमयवचनस्य चक्रार्द्धहानिगुणकविषयकत्वादिकमस्त्रिकोणगृहग इत्याद्याम्नातैकत्वस्योद्दिष्टविशेषणत्वेन यद्वैकत्वस्यद्विवक्षितत्वाच्चैकराशिगाः सर्वेपि अन्तर्दशापाचका इति । अतोत्र पक्तकमे तेखिला इति पठितव्यम् । एकभे वर्तमानास्ते ग्रहा अखिला अपि एकार: स्युरित्यर्थः । न च मयवाक्यादेकस्यैवान्तर्दशाप्रदत्वं शङ्क्यम् । तस्य चक्रार्द्धहानिविधायकहरनिर्णायकत्वादित्युक्तम् । हर्तेतिपदाम्नानसामर्थ्यात् अन्यथा एकः स एव दातेति वदेत् । बहवश्चेदित्यादिपराशरवाक्यस्यायमर्थः । चेदेकभे बहवो ग्रहाः स्युस्तदा तेखिला अपि यथोक्तं भागं मूलदशापतेरपहृत्य स्वं भागं ददति प्रयच्छन्ति । अत्राखिला इत्युक्तेपि पुनः सर्वे इति पदोपादानं सर्वेपि अन्तर्दशापाचकाः स्युर्न त्वेक इति दार्ढ्यार्थम् । ननु भवन्तु नाम समे वर्गेप्यन्तर्दशाप्रदाः का नो हानिस्तथाप्यन्तर्दशाक्रमः कथं स्यादित्यतो विशेषणद्वारेणाह ॥ केन्द्रादिगा इति । एकराशिगानां मध्ये यः सर्वाद्यदशापतेर्लग्नार्काद्यन्यतरस्मात्केन्द्रगस्तस्य प्रथमान्तर्दशा । तदनन्तरं पणफरस्थस्य तदनन्तरमापोक्लिमस्थस्य केन्द्रगेषु बहुषु यस्य दशाक्रमवीर्ये बहु तस्याद्यान्तर्दशानन्तरं तदूनबलस्य एवं पणफरापोक्लिमस्थेष्वपि । बलसाम्ये बह्वायुःक्रमेणायुःसाम्ये प्रथमोद्गमक्रमेण तत्साम्ये प्रथमोक्तक्रमेणान्तर्दशा स्यादित्यर्थः ॥ सर्वाद्यदशापतेस्त्वन्तर्दशाप्राप्तौ प्रथममन्तर्दशास्यैव कार्या । तेन यस्य पूर्वं दशा तस्यान्तर्दशापि पूर्वमेवेति

दशाक्रमादन्तर्दशाक्रमः स्यादिति भावार्थः । अत्र बहुषु एकरीत्या पाठात्पाठक्रमादन्तर्दशाक्रमः स्यादित्येके । दशाक्रमादन्तर्दशेत्यन्ये । त्रिकोणयोश्चतुरस्रयोरेकभे सप्तमे वा बहुषु सत्सु पाठक्रमेण निर्णयासंभवे दशाक्रमवशेन निर्णय इत्युभयोः पक्षयोः समुच्चयो न तु बाध्यबाधकभाव इत्यपरे ॥ अत्र ब्रूमः ॥ मूलपाकपतिः पूर्वं ददात्यन्तर्दशां ततः । दशाक्रमवशादन्ये दद्युरन्तर्दशां ग्रहाः ॥ इति भगवद्गर्गवाक्यात्केन्द्रादिगा इति प्राग्दर्शितपराशरवाक्यात्तथा केन्द्रादिदायगस्य तु सर्वस्य नाकद्युसदां बलानि तद्वशप्रसाध्यान्यधिकं हि यस्य । द्युचारिणस्तस्य दशागता स्यादन्तर्दशा वा विदशाह्वया वेति श्रीपत्याचार्योक्तेश्च दशाक्रमवशादेवान्तर्दशाक्रम इति । दायगस्य तु सर्वस्य सद्ग्रहस्य दलं भवेत् । सुतधर्मगयोस्त्र्यंशः पादं मृतिसुखस्थयोः । सप्तांशं सप्तमस्थस्य प्रक्रियाप्यधुनोच्यत इति पराशरजातके दशार्द्धमेकगेहगस्त्रिकोणगो गुणांशकम् । सुखेऽष्टमे युगांशकं नगांशमस्तभस्थित इति ह्यालुगिपद्धतौ तथा अर्द्धं तृतीयमङ्घ्रिं च तथार्द्धं स्याच्च सप्तमं भागम् । एकर्क्षे नवपञ्चमचतुर्थनिधनर्क्षसप्तानामिति भट्टोत्पलोदाहृतसत्याचार्यवाक्ये त्रिभागभागौ च त्रिकोणसंस्थ इत्यादियवनेश्वरवाक्ये च पाठभेददर्शनात्सर्वेष्वप्येकरीत्या पाठात्पाठक्रमेणान्तर्दशाक्रम इति पक्षो न बहु चातुरीगोचरः । अत एव समुच्चयपक्षोऽपि न रमणीयः । किं च यदि पाठक्रमवैयर्थ्यभिया तद्वशादन्तर्दशाक्रमः स्वीक्रियते तदा सर्वैरेकवचननिर्देशादेकराशिगानामेकस्यैव बलिष्ठस्यान्तर्दशास्त्वित्यनिष्टापादनम् । ननु तथापि पाठक्रमादन्तर्दशाक्रम इतिपक्षस्य बहुसंमतत्वादनेन दशाक्रमवशादन्तर्दशाक्रम इत्येकसंमतपक्षस्य बाध इति चेन्न ॥ शतमप्यन्धानां न पश्यतीति न्यायादेकेनापि गर्गवाक्येन बहूनामिदानींतनव्याख्यानामन्धस्थानीयानां प्रतिबन्धसंभवात् । तस्माद्दशाक्रमवशादन्तर्दशाक्रम इति गर्गेण कण्ठरवेणोक्तत्वाद्भगवतोत्पलेनाप्यस्यैवाङ्गीकरणाद्वाय-

मेव पक्षो ज्यायानित्यस्मद्गुरूणां मतम् ॥ अंशादीनिति ॥ स्पष्टं समच्छेदविधानं लीलावत्याम् । अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवमिति । स्वदशेत्यत्र स्वशब्देन मूलदशापतिः । अत्रोपपत्तिः । येऽन्तर्दशापाचका अर्द्धत्र्यादयोंशा यथाप्राप्तास्तज्जन्यान्तर्दशायोगो दशातुल्य इति तावत्प्रसिद्धम् । तस्मादंशयोगेन दशातुल्यान्तर्दशा लभ्यत इति निष्पन्नं, तत्र सदृशच्छेदानामंशानां योगोन्तरं वा कार्यमित्युक्तेः छिदां समतां कृत्वेत्युपपन्नम् । अत्रोदाहरणम् । अंशाः समच्छेदीकृता एते

| | | |
|---|---|---|
| २१ | ३ | ७ |
| २१ | २१ | २१ |

अथानुपातः । यद्यंशयोगेनानेन $\frac{३१}{२१}$ दशातुल्यान्तर्दशा तदा पृथक् पृथगंशकैः कियत्यन्तर्दशेति ।

| द | श | त्रि |
|---|---|---|
| १ | १ | १ |
| १ | ७ | ३ |

अत्र सच्छेदांशगुणदशायां सच्छेदांशयोगेन ह्रियमाणायां छेदं लवं च परिवर्त्येत्यादिना दशायां छेदो गुणो हरश्च तुल्यत्वात्तयोर्नाशो भविष्यतीति प्रागेव छिदां नाशं कृत्वेत्यपि साधूक्तम् । एवं छेदापगमे कृतेंऽशघ्ना स्वदशांशयोगेन भाज्यान्तर्दशा स्यादित्यप्युपपन्नम् ॥

इदानीं प्रत्यब्दमासद्युनिशाघटीजन्यसूक्ष्मफलज्ञानार्थं
विदशादिसाधनमाह ॥

**इत्याभ्यो विदशास्ततोऽप्युपदशास्ताभ्यश्च सूक्ष्मं फलम् ॥**

इत्यमुनाप्रकारेण आभ्योऽन्तर्दशाभ्यो विदशाः साध्याः । अयमभिसंधिः । अन्तर्दशा एव दशाः कल्प्याः । अन्तर्दशापतिर्दशापतिः कल्प्यः । ततोऽर्द्धस्यैकभग इत्याद्युक्तप्रकारेणान्तर्दशामध्ये विदशाः साध्या इति तथा विदशां दशां विदशापतिं दशेशं च प्रकल्प्य विदशामध्ये उपदशाः साध्याः । एवमग्रेऽपि द्रष्टव्यम् । तथासति सूक्ष्मं फलं स्यादित्यर्थः ॥

अथान्यदाह ॥

**पञ्चांगोनदिनद्वयं तु कथयेत्यायुः शतं दृश्यते ।**

पत्तैः खेटलवान्तरेण च भवेन्मासान्तरं चायुषः
प्रोक्तं यैस्तु दशादिलग्नजफलं तेभ्योऽनिदृग्भ्यो नमः ॥ ३४ ॥

एककलातुल्येन ग्रहान्तरेण यदि नवांशकलाभिः २०० रेकं वर्षं तदेककलया किमित्यनुपातेनायुष एकं दिनमष्टाचत्वारिंशत् घटिकाश्चान्तरं पतति । ब्रह्मसौरार्यादिभिः पत्रैर्ग्रहाणां भागाद्यमन्तरमस्ति । तेनायुर्दायस्य मासाद्यन्तरं स्यात् । किं च जन्मकालस्य पलमात्रान्तरेण लग्नषट्कला अन्तरं तेन च दशादिनान्यायुर्षोऽन्तरं पतति । एवमायुर्षोऽन्तरे संजाते दशाप्रवेशस्यान्तरं स्यात् । तथासति तत्कालीनलग्नफलं यैराचार्यैः श्रीपत्यादिभिरुक्तं तेभ्योऽतिदृग्भ्यो नमोऽस्त्वित्युपहासः । यद्यपि यन्त्रैः स्पष्टतरेण जन्मसमये येऽत्र खेटाः स्फुटा यत्पत्रेहि घटन्ते तत्पत्रे कार्या इति प्रागुक्तमस्ति तथा कृते आयुर्षोऽन्तरमपि न पतति तथापि यदि जन्मकालग्रहादिसाधनं स्पष्टतरं न क्रियते तदैतादृगमन्तरं पतति तस्मात्स्पष्टतरं तत्साधनं कार्यमिति शिष्यावधानार्थमेतदुक्तमिति बोध्यम् ॥

अत एव दशाप्रवेशकालीनलग्नसाधनं वदति ॥

शाकोऽब्दा जनिमध्यमार्कभमुखं मासादि तद्युग्दशा-
ब्दाद्यं तत्र शके समादितरणिर्मध्यो दशादौ भवेत् ।
षष्ठीभूतदशा पृथक् त्रिकु १३ हृता खाङ्काष्ट ८९० हृत्तद्युता
सा स्यात्सावनिका दशाब्दफलयुक्ताद्युक्जनिद्युव्रजः ॥ ३५ ॥

तस्मात्सावयवाद्गणात्स्वकरणात्साध्या दशादौ खगाः
चेपान् जन्मखगात्प्रकल्प्य यदि वा साध्या दशा सावनात् ।
ते स्पष्टाश्च तिथिश्च संक्रमवशान्मासो दशादौ ततः
पूर्वोक्तं जडकर्म चात्र तु मया तन्नापर्यं दर्शितम् ॥ ३६

शाके गताब्दाः कल्प्याः । जनिमध्यमार्कराश्यादिकं मासादि कल्प्यम् । तेनाब्दादिना युक्तं दशाया अब्दाद्यं कार्यम् । एवं कृते यः शक उत्पद्यते यच्च राश्यादि तत्र शके स राश्यादितरणिर्मध्यो दशादौ भवेत् । तत्र शके स राश्यादिसूर्यो मध्यमो यदा भवति तदा दशाप्रवेश इत्यर्थः । एतदुक्तं भवति । जन्मकालीनशके जन्मकालिकरवौ सर्वाद्यदशापतेर्लग्नसूर्यचन्द्रान्यतरस्य दशाप्रवेशः । तदनन्तरं तत्राब्दमासादौ सर्वाद्यदशेशदशाब्दाद्यं योज्यं तदग्रिमदशाप्रवेशः स्यात् । एवमग्रेऽपि यद्दशावर्षाणि योज्यानि तत्तदग्रिमदशाप्रवेशः स्यात् । एवं सामान्यतो दशाप्रवेशे ज्ञाते तात्कालिकमासाद्यानयनार्थमाह । घस्रीभूतदशेति । दशावर्षाणि द्वादशगुणानि तल्लस्थमासयुतानि मासाः स्युः । तान् त्रिंशता संगुण्य तत्र दिनानि योज्यानि सा घस्रीभूतदशा भवेत् । सा पृथक्स्था त्रयोदशगुणा खाङ्काष्टभि ८९० भक्ता लब्धेन दिनाद्येन पृथक्स्था युक्ता कार्या । दशाब्दतुल्यैः पलैश्च युक्ता कार्या सा सावनदिनात्मिका दशा भवति । तया सावनदशया युक् युक्तः जन्मकालिकोऽहर्गणः कार्यः । स दशाप्रवेशेऽहर्गणो भवति । जन्मदिनजार्कोदयिकोऽहर्गणोऽर्कोदयाद्गतनाडीपलयुतो जन्मकालिको द्युगणो भवतीति ध्येयम् । द्वितीयादिदशासावनयुतो द्वितीयादिदशाप्रवेशकालिको द्युगणस्तृतीयादिदशाप्रवेशकालिको भवतीत्यपि द्रष्टव्यम् । तस्मात्सावयवादहर्गणात् जन्मकाले यस्मात्करणाद्ग्रहाः साधितास्तत्करणोक्तप्रकारेण दशाप्रवेशे खगाः साध्याः ॥ विधान्तरमाह । वेतान् जन्मखगान्प्रकल्प्येति । दशासावनदिनाद्यमेव सावयवद्युगणं प्रकल्प्य जन्मकालिकचरदेशान्तराद्यसंस्कृतमध्यग्रहतुल्यं क्षेपं च प्रकल्प्य स्वकरणाद्ग्रहाः साधनीयाः । परमत्र दशासाधनं जन्मकालादारभ्य व्यतीतदशासाधनोपेतं ग्राह्यमिति बोद्धव्यम् । यद्वा केवलदेशसाधनतुल्याहर्गणात्पूर्वदशाप्रवेशकालिकखगान् क्षेपान् प्रकल्प्य ग्रहाः साध्या इत्यपि द्रष्टव्यम् । ततः

पक्षद्वयेनापि ये साधितग्रहास्ते लङ्कापूर्वक्षितिजासन्नप्रदेशमध्यार्कसंबन्धकालाद्वास्तवदशाप्रवेशनाडीतुल्येऽनेहसि जाता अपेक्षितास्तु स्वदेशस्पष्टार्कोदयकालदशाप्रवेशनाडीतुल्ये काल इत्युदयान्तरचरदेशान्तरभुजान्तरसंस्कृताः कार्याः । संस्कारस्तु दिनार्द्धतुल्याभी रात्र्यर्द्धतुल्याभिर्वा नतघटीभिरेताश्चरकलास्तदेष्टनतघटीभिः किमित्यनुपातलब्धकलाभिः कार्य इत्याहुर्भाष्यकृतः । अथ ते ग्रहाः स्पष्टाः कार्याः । ततः स्फुटार्केन्दुभ्यां विरविचन्द्रलवा रविहृता इत्यादिना तिथिश्च साध्या । तस्या घटिकाद्यं दशाप्रवेशकालिकरवीन्दुभ्यां साधितत्वाद्दशाप्रवेशकालादनन्तरं स्यादतो दशाप्रवेशनाडीमुखेन संस्कृतं सूर्योदयाज्ज्ञायत इति धीमद्भिरवलोक्यम् । या तिथिरानीता सा यदि पञ्चदशभ्यो न्यूना तदा शुक्लपक्षोऽन्यथा कृष्णपक्ष इति ज्ञेयम् । संक्रमवशान्मासो ज्ञेयः ॥ अत्रेदमवधेयम् । स्पष्टसूर्यस्य भुक्तानां भोग्यानां चांशानां कलाः स्पष्टगत्या भक्ता लब्धदिनादिद्वयेन दशाप्रवेशकालात्प्रागूर्ध्वं च क्रमेण पूर्वापरसंक्रान्ती भवतः । ततो यस्मिन् दशापतावधिके मासि दशाप्रवृत्तिस्तत्र यदि मेषसंक्रमणं तदा स चैत्र एवं वृषादिसंक्रमणे वैशाखादिसंज्ञा । यदा तु पूर्वसंक्रान्तिः पूर्वदर्शान्तात्प्रागपरसंक्रान्तिरग्रिमदर्शान्तानन्तरं भवति तदासौ संक्रान्तिरहितोऽधिमासोऽग्रिममासनामा भवति । यदा संक्रान्तिद्वयं तन्मास एव तदा क्षयमास इति ॥ प्रथमपक्षेऽहर्गणः सप्तनष्टः करणादिवारादूतो वारो भवेत्तन्नाडिकाद्यमेव सूर्योदयादिष्टकालः । द्वितीयेऽहर्गणो जन्मनाडीपलयुतः सप्तनष्टो जनुर्वारादूतो वारस्तदधःस्थनाड्याद्यमेवेष्टकालः । तृतीये द्युगणः पूर्वदशाप्रवेशनाडीपलयुतो द्विनष्टः पूर्वदशादिवारादूतो वारोऽधःस्थनाडीमुखमेवेष्टकालः । प्रथमपक्षे जन्मकालिकसूर्यसिद्धान्ताहर्गणे यदि दशासाधनं योज्यते तदाहर्गणनाड्यो रात्र्यर्द्धेनोनाः सूर्योदयादिष्टकालः स्यादिति पूर्वैः श्रीपत्यादिभिर्युगार्कपक्षैर्युगसूर्यसावन इत्यादिना जडकर्म कृतम् ।

अत्र तु मया तस्माल्लाघवं दर्शितम्। यत्त्विदं पाण्डित्यमात्रं पूर्वोक्तत्वान्मयाप्युक्तमित्युक्तं तद्वापातत इति वेदितव्यम् । अत्रोपपत्तिः ॥ वर्षायनर्तुयुगपूर्वकमत्र सौरादित्युक्तेर्ये दशादिवशाः कृतास्ते तु सौरा एव । अथ तेषां सावनीकरणमन्तरेण दशाप्रवेशकालिकलग्नादि साधयितुं न पार्यत इति सावनीकरणार्थमुपायः । तत्रैते सूर्यसिद्धान्तमते युगसावनाः १५७७९१७८२८ सौराश्च १५५५२००००० एषामन्तरम् । २२९७१७८२८ ॥ अथानुपातः । यदि युगसौरदिनैरेभिः १५५५२००००० सौरापेक्षया सावनेष्वेतावदाधिक्यं २२९७१७८२८ लभ्यते तदेष्टैः किमिति । अत्र गुणहरयोर्दशांशेन १७४७५२५ गुणेऽपवर्तिते त्रयोदश लब्धाः १३ तथा तेनैव हरेऽपवर्तिते किं विन्यूनाः खाङ्काष्टौ ८९० लब्धास्ते सपूर्णा गृहीताः । तस्माद् घस्रीभूतदशा त्रिकुहता खाङ्काष्टभक्ता लब्धेभ्यः सावनेभ्यः सौराणां न्यूनत्वात्पृथक्स्था घस्रीभूतदशा युक्ता कार्येत्युपपन्नम् । परमत्र हराधिक्ये फलाल्पत्वनियमात् खाङ्काष्टहरस्याधिकस्योपादानाद्युगसौराः पृथक्स्थास्त्रयोदशघ्नाः खाङ्काष्टभक्ता लब्धान्विना युगसावनेभ्योऽल्पा जायन्ते तेषां युगसावनानां चान्तरमेतत् १४२३ । अथ यदि युगसौरवर्षैः ४३२०००० इदमन्तरं १४२३ तदेष्टैः किमिति फलस्य दिनात्मकत्वाद्दिनात्मकं फलमागस्यति । तत्र दिनघटीस्थाने शून्यमेवोपलभ्यत इति पलात्मकफलानयनार्थं षष्टिघ्नो गुणः ३६०० अस्यान्तरस्य च वधे जाते इष्टवर्षाणां गुणः ५१२२८०० हरश्चायं ४३०००० स्वल्पान्तरमनयोरुपेक्ष्य नाशे कृते दशावर्षतुल्यान्येव पलानीत्युपपन्नम् । पूर्वसाधितसावनेष्वेतावन्न्यूनमासीदतो योज्यमित्यपि साधु । पूर्वदशाप्रवेशकालीनमध्यमार्कः पूर्वदशामासादितुल्यराश्यादियुतः पूर्वदशामानोत्थमध्यमार्कजन्मकालीनमध्यार्कयोगतुल्यापरदशाप्रवेशजमध्यार्केण यथा समो भवति न तथा स्पष्टार्क इति मध्यमार्क एव दशामासादियोजनं युक्तम् । शेषोपपत्तिः सुगमा बालावबोधा च ॥

इदानीं दशाशुभाशुभफलमाह ॥

चन्द्रः प्राप्तदशेश्वरस्य सुहृदुच्चस्वर्क्षसंस्थो दशा-
नाथाद्दीनवसप्तमोपचयगो दद्याच्छुभानीति च ।
यस्मिन्भेच विधुः स जन्मनि तनुस्वायादिभावो यदा
तत्तद्वृद्धिकरोथ तत्क्षयकरः प्रोक्तेतरस्थानगः ॥ ३७ ॥

प्राप्तदशायाः स्वामिनो यन्मित्रगृहमुच्चं वा तत्रस्थश्चन्द्रः शुभानि दद्यात् । अथ वा कर्कटस्थश्चन्द्रोथ वा दशेशात्सकाशा-त्पञ्चमनवमसप्तमतृतीयषष्ठदशमैकादशस्थानान्यतरस्थानस्थः शुभानि दद्यात् । एवं शुभफलप्रदे चन्द्रे सति अत्र दशाकाले यस्मिन् राशौ चन्द्रः स राशिर्जन्मकाले यस्मिन्भावे पतितस्तद्भाववृद्धिकरो भव-ति । एतदुक्तं भवति । यदि चन्द्राधिष्ठितराशिस्तनुभावे स्यात्तदा शरीरसौख्यं यदि धनादिभावे तदा धनादिसौख्यमिति । यदि तु शत्रुमृत्युव्ययभावेषु स्यात्तदा तद्भावनाशः । सत्यः कथयति विपरीत रिष्फषष्ठाष्टमेष्विति वराहवचनात् । यदि प्रोक्तान्यस्थानस्थश्चन्द्रः स्यात्तदा तदधिष्ठितराशिर्यस्मिन् लग्नादिभावे तन्नाशः स्यात् । अरिमृत्युव्ययस्थो यदि स राशिस्तदा तद्भाववृद्धिः ॥

अथान्यदाह ॥

यद्द्रव्यं खचरस्य भावदृग्दृग्योगादि सर्वं फलं
योज्यं वृत्तिकृतिर्बलादिच दशायां चाथ यो वैरयुक् ।
पापः पापदशां विशेत्स च विपत्कर्ताथ तद्भङ्गद-
स्तत्काले बलवान् खगः शुभसुहृद्दृष्टेष्टषड्वर्गगः ॥ ३८ ॥

खचरस्य यद् द्रव्यं ताम्रं स्यान्मणिहेमेत्यादिकं कथित तत्सर्वं दशाया योज्यं । तथा भावफलदृष्टिफलराशिफलादिक सर्वं फलजात दशायां योज्यं । वृत्तिकृतिर्जीविका । अथ देवदत्तः केन

कर्मणा जीवनं करिष्यतीत्यादिरूपा दशायां योज्या । नन्वेतत् कथं योज्यमित्यत आह । बलादिति । सबले यथोक्तं फलं संपूर्णं मध्यबले मध्यं हीनबलेऽतिस्वल्पमित्यर्थः । अथानन्तरं वैरेण युक् युक्तः शत्रुरिति यावत् । क्रूरस्य मूलदशापतेः शत्रुर्यदि क्रूरो मूलदशायामन्तर्दशां करोति तदा विपत्तिः स्यात् । अत्रायमभिसंधिः । यदि क्रूरः क्रूरदशामध्येऽन्तर्दशां कुर्यात्तदा विपत्तिः स्यात् । यदि त्वन्तर्दशाकारको ग्रहः पापो मूलदशापतेः शत्रुस्तदा महती विपत्तिः । यथोक्तं सारावल्याम् । क्रूरदशायां क्रूरः प्रविश्य चान्तर्दशां कुरुते । दुःखं स्यात्सन्देहस्तदारियोगे सदैव महानिति वैरियुगित्यपपाठः । अथेन्दुवारिष्टस्यापवादं वदति । तद्वदिद इति । अन्तर्दशाकाले कश्चित् बली ग्रहः शुभमित्रेण दृष्टोऽथ वा शुभसप्तवर्गगोऽथ वेष्टाधिकः स रिष्टभङ्गः स्यात् । तथोक्तं सारावल्याम् । प्रवेशे बलवान् खेटः शुभमित्रैर्निरीक्षितः ॥ सौम्याधिमित्रवर्गस्थो मृत्युकृन्न भवेत्तदेति ॥

अथाष्टवर्गफलस्य स्वल्पत्वाधिकत्वकल्पनाविचारमाह ॥

> खेटस्तस्य यदष्टवर्गजफलं पूर्णं शुभं जन्मत-
> स्त्विन्द्वोर्वृद्धिषु च स्वभोच्चभसुहृद्भस्वत्रिकोणेऽस्ति यः ।
> दुष्टं मध्यफलं विपर्ययगतस्यानिष्टमत्युत्कटं
> मस्तं स्वल्पतरं खगस्य च वदेत् ज्ञात्वा फलं तत्वतः॥७८॥

जन्मतन्विन्द्वोः वृद्धिषु स्वभोच्चभसुहृद्भस्वत्रिकोणे च यः खेटः अस्ति तस्य यच्छुभमष्टवर्गफलं तत्पूर्णं स्यादित्यन्वयः । तनुश्चेन्दुश्च तन्विन्दू जन्मनि तन्विन्दू तयोः जन्मलग्नजन्मराश्योरित्यर्थः । वृद्धिषूपचयभवनेषु । स्वभोच्चभसुहृद्भस्वत्रिकोण इत्यत्र स्वभावाद्द्वन्द्वः । स्वराशौ स्वोच्चे स्वमित्रगेहे स्वमूलत्रिकोण इत्यर्थः । तत्र तादृग्ग्रहस्य दुष्टं मध्यफलं स्यात् । दुष्टं फलं मध्यं स्यादित्यर्थः । विपर्ययगतस्य जन्मराशिजन्मलग्नयोरपचयस्थानेषु नीचभे

शत्रुभे वा स्थितस्य ग्रहस्यानिष्टफलमयुक्तं स्यात् । ग्रस्तं समीचीनं फलं स्वल्पतरं स्यात् । अत्र जन्मलग्नराश्योरुपचयस्थस्य सतः शत्रुनीचभस्थितस्याथ वा तयोरपचयस्थस्य सतः स्वोच्चादिषु स्थितस्य शुभमशुभं समं स्यात् ॥ एवं जन्मलग्नराश्योरेकस्मादुपचयस्थोऽन्यस्मादपचयस्थो यदि स्वभोच्चादिष्वस्ति तस्य शुभमधिकमशुभमल्पं स्यात् ॥ यदि तादृशो नीचारिभेऽस्ति तदा तस्याशुभमधिकं शुभं न्यूनं स्यादिति ध्येयम् । खगस्य बलं तत्वतो ज्ञात्वा फलं वदेत् यथा ग्रहे संपूर्णबले शुभमशुभं च फलं सपूर्णं मध्यबले मध्यं हीनबले हीनमित्येतत्प्रथममवधार्यानन्तरं प्रोक्तप्रकारेण न्यूनत्वाधिकत्वं वाच्यमित्यर्थः ॥

अथोदर्कस्य बहुविधत्वात्कालस्य दुर्लक्ष्यत्वात्क्वचिज्ज्ञातकफलस्य व्यभिचारे किं कर्तव्यमित्याह ॥

जीवेत्क्वापि विभङ्गरिष्टजशिशू रिष्टं विना मीयते-
थायोऽब्दः शिशुदुस्तरोऽपि च परो कार्येषु नो पत्रिका ।
कार्या प्रश्ननिमित्तपूर्वशकुनैरन्वस्मानं धिया
होराज्ञेन सुबुद्धिनात्र बहुधोदर्कस्य कालो बली ॥ ४० ॥

क्वापि विगतो भङ्गो यस्य तादृशं यद्रिष्टं तत्र जातः शिशुर्जीवेत् । अत्र ढ्रलोपे पूर्वस्य दीर्घो ण इति सूत्रेण दीर्घत्वम् । क्वापि स्थले रिष्टं विनापि शिशुः मीयते प्राणैः वियुज्यत इत्यर्थः । मीङ् हिंसायाम् । हिंसात्र प्राणवियोगः ॥ दिवादिभ्यः श्यन् । मीयत इत्यस्य मरणार्थवाचकत्वमाख्यातचन्द्रिकायामप्युक्तम् । परैति प्रैति मरणे म्रियते च प्रमीयते । संतिष्ठते समाप्नोति चिरमत्यारमत्यपीति ॥ १ ॥ के चित्तु मृङ् प्राणत्याग इतिधातोर्म्रीयत इति रूपमत्र पठन्ति । तदसत् । दीर्घस्यासंभवात् । म्रियत इति पाठे तु छन्दोभङ्गः । तस्मान्मीयत इत्येव पाठः साधीयान् क्वापि

धोदर्कस्य कालो बलीति । बहुप्रकारं भाविफलं बलवदित्यर्थः तथा चाहुः ॥ स्वप्नो निमित्तं शकुनाः स्वकर्मशारीरमागन्तुकमङ्गनानि दोषाभिचारग्रहचारकालकाम्यानि चैवं त्रिविधः फलाध्वा ॥ १ ॥ एवं फलमार्गाणां बहुत्वाद्बहुप्रकारैः शुभं विचार्य पत्रिका विधातव्येति भावः । रचनस्वमानमिति । प्राचीनगर्गादिग्रन्थानां लुप्तत्वादिदानीन्तनग्रन्थे तु सकलशिष्टग्रन्थानामसत्त्वादिदमित्थमेव भविष्यति चेन्मया यदीपदोतं त्याज्यमित्यादिरूपा प्रतिज्ञा न कार्या किं प्रचरद्वस्थग्रन्थपर्यालोचनयैतादृशमस्तीति वाच्यमिति भावः । अथ संरचमानं निजं होराचैनेति पाठश्चेत्साधुः । अन्यथा रचनस्वमानमित्यस्य निराकांक्षतयानन्वयादनन्वितमपार्थकमित्यपार्थकता क्वचित्पुस्तके धाता स्वमानं धियेति पाठो दृश्यते स तु नितरां साधुः स्वमानं धाता रचतेत्यर्थः । क्वचित्तु मानं धिया रचतेति पाठः सोपि साधीयान् ॥

अथ ग्रन्थालङ्कारमाह ॥

नन्दिग्रामे केशवो विप्रवर्यो योभूद्धोराशास्त्रसंघं विलोक्य । तेनोक्तेयं पद्धतिर्जातकीया चत्वारिंशद्वृत्तबद्धा सुबोधा ॥ ४१

स्पष्टार्थम् ॥

इदानीं ग्रन्थपाठकफलावाप्तिव्याजेन ग्रन्थप्रशंसामनुष्टुप्छन्दसाह ॥

ये सुबोधां पठन्तीमामग्र्यां जातकपद्धतिम् ।
होराविस्पदवीं यान्ति लोके मानं यशः सुखम् ॥ ४२

सुगमम् ॥

गोतम्युत्तरतीरवर्तिनगरे गोलग्रविद्वद्युते
गोलग्रामसमाह्वये मुनिभरद्वाजान्वये दैवविद् ।
योभूत्सुधदिवाकरो बुधवरः श्रीकेशवोस्यात्मजा-
द्विश्वाद्यंगणेशसद्गुरोर्लब्धावबोधांशकः ॥ १ ॥